श्रीगणेशाय नमः ॥ ॥ अथानन्तपूजाविधिः ॥ प्रातर्नद्यादिकेस्नात्वानित्यकर्मसमाप्यच ॥
अनन्तंहृदये कृत्वाशुचिस्तत्रसमाहितः ॥ अव्रणंकलशंचैववस्त्रयुग्मेनवेष्टितम् ॥ मुष्टिमात्रेणद
र्भैस्तुफणिराजंचकारयेत् ॥ स्थापयेत्कलशस्याग्रेजगदाधारमव्ययम् ॥ आराधयेदनंतंचतस्मि
न्कुम्भेविशेषतः ॥ गोचर्ममात्रमालिप्यगोमयेनविचक्षणः ॥ तन्मध्येस्थण्डिलंकृत्वापद्ममष्टदलं
लिखेत् ॥ तस्योपरिन्यसेत्कुम्भंचूतपल्लवसंयुतम् ॥ प्राणायामंततः कृत्वातिथ्यादिपरिकीर्तयेत् ॥
ममसहकुटुम्बस्यक्षेमस्थैर्यायुरारोग्यचतुर्विधपुरुषार्थसिद्ध्यर्थंमयाआचरितस्यआचर्यमाणस्यच
व्रतस्यसम्पूर्णफलावाप्त्यर्थंश्रीमदनन्तदेवताप्रीत्यर्थंयथाज्ञानेनध्यानावाहनादिषोडशोपचारैः श्री
मदनन्तपूजांकरिष्ये ॥तथाचआसनादिकलशाराधनादिचकरिष्ये॥ ॥इतिसंकल्प्य ॥ ॥पृथिवी
वीति०॥इत्यासनविधिंकृत्वा॥कलश०॥सर्वेसमुद्राः०॥ सितासिते०॥कलशेवरुणंसम्पूज्य॥ ततः
शंखंघण्टां च पूजयेत् ॥ अपवित्रः० ॥ पूजाद्रव्याणिआत्मानंचप्रोक्ष्ययमुनांपूजयेत् ॥ ॥ तद्य

था ॥ ॥ श्रीमदनन्तव्रताङ्गत्वेनश्रीयमुनापूजनंकरिष्ये ॥ लोकपालस्तुतांदेवीमिन्द्रनीलसमुद्भवाम् ॥ यमुनेत्वामहंध्यायेसर्वकामार्थसिद्धये ॥ ध्यानम् ॥ सरस्वतिनमस्तुभ्यंसर्वकामप्रदायिनि ॥ ॥ आगच्छदेवियमुनेव्रतसंपूर्तिहेतवे ॥ इमंमेगंगेइत्यावाह्य ॥ सिंहासनसमारूढेदेवशक्तिसमन्विते ॥ सर्वलक्षणसंपूर्णेयमुनायैनमोस्तुते ॥ आसनम् ॥ रुद्रपादेनमस्तुभ्यंसर्वलोकहितप्रिये ॥ सर्वपापप्रशमनितरंगिण्यैनमोस्तुते ॥ पाद्यम् ॥ गरुडपादेनमस्तुभ्यंशंकराप्रियभामिनि ॥ सर्वकामप्रदेदेवियमुनेतेनमोनमः ॥ अर्घ्यम् ॥ विष्णुपादोद्भवेदेविसर्वाभरणभूषिते ॥ कृष्णमूर्तेमहादेविकृष्णावेण्यैनमोनमः ॥ आचमनम् ॥ सर्वपापहरेदेविविश्वप्रियप्रदर्शिनि ॥ सौभाग्यंयमुनेदेहियमुनायैनमोस्तुते ॥ मधुपर्कम् ॥ नंदिपादेमहादेविशंकरार्धशरीरिणि ॥ सर्वलोकहितेदेविभीमरथ्येनमोस्तुते ॥ पंचामृतस्नानम् ॥ सिंहपादोत्तमेदेविनारसिंहसमप्रभे ॥ सर्वलक्षणसंपूर्णेभवनाशिनितेनमः ॥ शुद्धोदकस्नानम् ॥ विष्णुपादाब्जसंभूतेगंगेत्रिपथगामिनि ॥

सर्वपापहरेदेविभागीरथ्यैनमोस्तुते ॥ श्वेतवस्त्रम् ॥ त्रैयंबकजटोद्भूतेगौतमस्याघनाशिनि ॥ सप्तधासागरंयातिगोदावरिनमोस्तुते ॥ कंचुकीम् ॥ माणिक्यमुक्तावलिकौस्तुभांश्चगोमेदवैडूर्यसु पुष्परागैः ॥ वज्रैश्वनीलैश्वसुशोभितानिगृहाणसर्वाभरणानिदेवि ॥ आभरणानि ॥ चंदनागरुक स्तूरीरोचनंकुंकुमंतथा ॥ कर्पूरेणसमायुक्तंगंधंदास्मिचभक्तितः ॥गंधं०॥श्वेतांश्चचंद्रवर्णाभान्हरिद्रा रागरंजितान् ॥ अक्षतांश्चसुरश्रेष्ठेददामियमुनेशुभे ॥ अक्षतान्० ॥ मंदारमालतीजातीकेतकीपा टलैः शुभैः ॥ पूजयामिचदेवेशियमुनेभक्तवत्सले ॥ पुष्पाणि० ॥ अथांगपूजा ॥ चंचलायैनमः ॥ पादौपूजयामि ॥ चपलायैनमः ॥ जानुनीपूजयामि ॥ भक्तवत्सलायैनमः ॥ कटीपू० ॥ हरायै० ॥ नाभिंपूजयामि ॥ मन्मथवासिन्यै० ॥ गुह्यंपू० ॥ अज्ञानवासिन्यै० ॥ हृदयंपू० ॥ भद्रायैनमः ॥ स्तनौ० ॥ अघहंत्र्यै० ॥ भुजौपूज० ॥ रक्तकंठ्यै० ॥ कंठंपू० भवहर्त्र्यैनमः ॥ मुखंपू० ॥ गौर्यैन० ॥ नेत्रेपू० ॥ भागीरथ्यै०॥ ललाटंपू०॥ यमुनायै० ॥ शिरःपू० ॥ सरस्वत्यै

नमः ॥ सर्वांगंपूज० ॥ अथनामपूजा ॥ यमुनायै० ॥ सितायै० ॥ कमलायैन० ॥ उत्पलायै० ॥ अभीष्टप्रदायै० ॥ धात्र्यै० ॥ हरिहररूपिण्यैन० ॥ गंगायैन० ॥ नर्मदायैनमः ॥ गौर्यै० ॥ भागीरथ्यै० ॥ तु ायै० ॥ भद्रायै० ॥ कृष्णावेण्यै० ॥ भवनाशिन्यै० ॥ सरस्वत्यै० ॥ कावेर्यै० ॥ सिंधवे० ॥ गौतम्यैन० ॥ गोमत्यै० ॥ गायत्र्यै ० ॥ गरुडायै० ॥ गिरिजायै० ॥ चंद्रचूडायै० ॥ सर्वेश्वर्यै० ॥ महालक्ष्म्यै० ॥ सर्वपापहरेदेविसर्वोपद्रवनाशिनि ॥ सर्वसंपत्प्रदेदेवियमुनायैनमोस्तुते ॥ इतिनामपूजा ॥ दशांगोगुग्गुलूद्भूतश्चंदनागरुसंयुतः ॥ कपिलाघृतसंयुक्तो धूपोयंप्रतिगृह्यताम् ॥ धूपंस० ॥ घृतवर्तिसमायुक्तंवह्निनायोजितंमया ॥ गृहाणदीपकंदेविसर्वैश्वर्यप्रदायिनि ॥ दीपं० ॥ शर्करामधुसंयुक्तदधिक्षीराज्यसंयुतम् ॥ पक्वमन्नंमयादत्तंनैवेद्यंप्रतिगृह्यताम् ॥ नैवेद्यं० ॥ पानीयंपावनंश्रेष्ठगंगादिसरिदुद्भवम् ॥ हस्तप्रक्षालनंदेविगृहाणमुखशोधनम् ॥ हस्तप्रक्षालनं० ॥ मुखप्रक्षालनं० ॥ कर्पूरेणसमायुक्तंयमुने

चारुचंदनम्॥समर्पितंमयातुभ्यं करोद्वर्तनकंकुरु ॥ करोद्वर्तनार्थेचंदनं० ॥इदंफलमितिफलं० ॥ पूगीफलमितितांबूलं० ॥हिरण्यगर्भेतिदक्षिणां०॥त्रैलोक्यपावनेगंगेअंधकारविनाशिनि॥पंचार्तिक्यंगृहाणेदंविश्वप्रीत्यैनमोस्तुते॥आर्तिक्यं० ॥ केतकीजातिकुसुमैर्मल्लिकामालतीभवैः ॥पुष्पांजलिर्मयादत्तस्तवप्रीत्यैनमोस्तुते ॥पुष्पांजलिंसमर्पयामि ॥ यानिकानिचेतिप्रदक्षिणाम् ॥अन्यथाशरणंनास्तित्वमेवशरणंमम ॥तस्मात्कारुण्यभावेनसंरक्षपरमेश्वरि ॥नमस्कारान्० ॥ सुरासुरेंद्रादिकिरीटमौक्तिकैर्युक्तंसदायत्तवपादपंकजम् ॥ परावरंपातुवरंसुमंगलंनमामिभक्त्याममकामसिद्धये ॥ भवानिचमहालक्ष्मिसर्वकामप्रदायिनि ॥ व्रतंसंपूर्णतांयातुयमुनायैनमोस्तुते ॥ इति प्रार्थना ॥ इतियमुनापूजा ॥ ॥ यमुनाकलशोपरिपूर्णपात्रंनिधायास्योपरिसप्तफणायुतंशेषंस्थाप्यपूजयेत् ॥ अथध्यानम् ॥ ब्रह्मांडाधारभूतंचयमुनांतरवासिनम् ॥ फणासप्तसमायुक्तंध्यायेऽनंतंहरिप्रियम् ॥ ध्यायामि ॥ शेषंसप्तफणायुक्तंकालपन्नगनायकम् ॥ अनंतशयनार्थंत्वांभक्त्या

ह्यावाहयाम्यहम् ॥ आवाहनम् ॥ नवनागकुलाधीशशेषोद्धारककाश्यप ॥ नानारत्नसमायुक्त मासनंप्रतिगृह्यताम् ॥ आसनम् ॥ अनंतप्रियशेषेशजगदाधारविग्रह ॥ पाद्यंगृहाणभक्त्यात्वं काद्रवेयनमोस्तुते ॥ पाद्यम् ॥कश्यपानंदजनकमुनिवंदितभोः प्रभो ॥ अर्घ्यंगृहाणसर्वज्ञसादरं शंकरप्रिय ॥ अर्घ्यं० सहस्रफणिरूपेणवसुधोद्धारकप्रभो॥गृहाणाचमनंदेवपावनंचसुशीतलम् ॥ आचमनम् ॥ कुमाररूपिणेतुभ्यंदधिमध्वाज्यसंयुतम् ॥मधुपर्कंप्रदास्यामिसर्पराजनमोस्तुते ॥ मधुपर्कं० ॥ ततः ॥ पंचामृतस्नानम् ॥ गंगादिपुण्यतीर्थैस्त्वामाभिषिंचेयमादरात् ॥ बलभद्रा वतारेशनंददश्रीपतेः सखे ॥ स्नानं० ॥ कौशेययुग्मंदेवेशप्रीत्यातवमयार्पितम् ॥ गृहाणपन्नगा धीशताक्ष्र्यशत्रोनमोस्तुते ॥ वस्त्रं० ॥ सुवर्णनिर्मितंसूत्रंग्रथितंकण्ठहारकम् ॥ अनेकरत्नैः खचितंसर्पराज नमोस्तुते ॥ यज्ञोपवीतम् ॥ अनेकरत्नान्वितहेमकुंडले माणिक्यसं काशितकंकणद्वयम् ॥ हेमांगुलीयंकृतरत्नमुद्रिकंहैमंकिरीटंफणिराजतेर्पितम् ॥सर्वाभरणम् ॥

कांशतककंणद्वयम् ॥ हेमांगुलीयकृतरत्नमुद्रिकहेमांकिरीटफणिराजतोपितम् ॥सर्वाभरणम् ॥



श्रीखंडं० ॥ चंदनं० ॥ अक्षताश्चसुरश्रेष्ठ० ॥ अक्षतान्० ॥ करवीरैर्जातिकुसुमैश्चं० ॥
पुष्पाणि० ॥ अथांगपूजा ॥ सहस्रपादाय० ॥ पादौपू० ॥ गूढगुल्फाय० ॥ गुल्फौपू०
हेमजंघायन ०॥ जंघेपू० ॥ मंदगतये० ॥ जानुनीपूं०॥ पीतांबरधरायन० ॥ कटी
पू० ॥ गंभीरनाभायन० ॥ नाभिंपूज० ॥ पवनाशनाय० ॥उदरंपू० ॥ उरगाय० ॥ हस्तौपू०॥
कालिकायनमः ॥ भुजौपूजयामि ॥ कम्बुकण्ठायनमः ॥ कण्ठंपूजयामि ॥ विषवक्त्रायनमः ॥
वक्त्रंपूजयामि ॥ फणाभूषणाय० ॥ ललाटंपू ॥ लक्ष्मणाय० ॥ शिरः पूजयामि ॥ अनंतप्रिया
य० ॥ सर्वांगंपूजयामि ॥ इत्यंगपूजा ॥ वनस्पति० ॥ धूपं० ॥ साज्यंचवर्ति० ॥ दीपं० ॥ नैवे
द्यंगृ० ॥ नैवेद्यं० ॥ मध्येपानीयं०॥उत्तरापोश०॥हस्तप्रक्षालनं०॥मुखप्रक्षालनं०॥करोद्वर्तनार्थे
चंदनं० ॥ पूगीफलं० ॥ तांबूलं० ॥इदंफलं० ॥ फलं० ॥ हिरण्यगर्भेतिदक्षिणां० ॥ श्रियेजातइ
तिनीराजनम् ॥ नानाकुसुमसंयुक्तंपुष्पांजलिमिमंप्रभो ॥ कश्यपानंदजनकसर्पेशप्रतिगृह्यताम् ॥

मंत्रपुष्पं ० ॥ यानिकानि० ॥ प्रदक्षिणां० ॥ नमोस्त्वनंताय० ॥ नमस्कारान्० ॥ अनंतकल्पोक्तफलंदेहिमेत्वंमहीश्वर ॥ त्वत्पूजारहितश्चार्द्धंफलंप्राप्नोतिमानवः ॥ प्रार्थनां० ॥ इतिशेषपूजा ॥ अथ द्वारपूजा ॥ प्राग्द्वारे ॥ द्वारश्रियै० नंदायै० सुनन्दायै० धात्र्यै न० विधात्र्यै न० चिच्छक्त्यै० शंखनिधयेन० पद्मनिधयेन० ॥ दक्षिणद्वारे ॥ द्वारश्रियै० चंडायै० प्रचंडायै० धात्र्यै० चिच्छक्त्यै० मायाशक्त्यै० शंखनिधये० पद्मनिधयेनमः ॥ पश्चिमद्वारे ॥ द्वारश्रियै० बलायै० प्रबलायै० धात्र्यै० विधात्र्यै० चिच्छक्त्यैन० मायाशक्त्यै० शंखनिधये० ॥ पद्मनिधये० ॥ उत्तरद्वारे॥द्वारश्रियै०महाबलायैनम॥प्रबलायैनमः॥धात्र्यै०विधात्र्यै०चिच्छक्त्यै०मायाशक्त्यै० शंखनिधये० पद्मनिधये० ॥अथपीठपूजा ॥ मध्ये वास्तुपुरुषायन० मंडूकाय० कालाग्निरुद्रायन० आधारशक्त्यैन० कूर्माय० पृथिव्यै० अमृतार्णवाय० श्वेतद्वीपाय० कल्पवृक्षेभ्यो० मणिमन्दिरायन० हेमपीठाय० धर्माय० अधर्माय० ज्ञानाय० वैराग्याय० ऐश्वर्याय० अनैश्वर्याय०

मान्दरायन॰ हेमपीठाय॰ धर्माय॰ अधर्माय॰ ज्ञानाय॰ वैराग्याय॰ ऐश्वर्याय॰ अनैश्वर्याय॰



सहस्रफणान्वितायानंताय॰ सर्वसत्त्वायन॰पद्माय॰ आनंदकंदाय॰ संविन्नालाय॰ वह्निमंडला
य॰संसत्त्वाय॰रंरजसे॰तंतमसे॰ आत्मने॰परमात्मनेनमःअंतरात्मनेन॰ज्ञानात्मने॰प्राणात्मने
कालात्मनेनमः॥पूर्वादिदिक्षु॥जयायैनमःविजयायैनमःअजितायैनमःअपराजितायै॰नित्यायै॰
विनाशिन्यै॰ दोग्ध्र्यैनमः अघोरायैनमःमंगलायैनमः अपारशक्तिकमलासनायैनमः॥ इतिपी
ठपूजा॥ अस्यश्रीप्राणप्रतिष्ठामंत्रस्यब्रह्मविष्णुमहेश्वराऋषयः॥ ऋग्यजुःसामाथर्वाणिच्छंदांसि॥
पराप्राणशक्तिर्देवता॥ आं बीजम्॥ ह्रींशक्तिः॥ क्रौं कीलकम्॥ श्रीमदनंतस्यप्राणप्रतिष्ठा
पनेविनि॰॥ ॐआंह्रींक्रौंअंयंरंलंवंशंषंसंहंळंक्षंअः क्रौंह्रींआंअनंतस्यप्राणाइहप्राणाः॥ॐआंह्रीं॰
अनंतस्यजीवइहस्थितः॥ ॐआंह्रींक्रौं॰ अनंतस्यसर्वेन्द्रियाणि वाङ्मनस्त्वक्चक्षुः श्रोत्रजि
ह्वाघ्राणपाणिपादपायूपस्थानीहागत्यसुखंचिरंतिष्ठंतुस्वाहा॥ असूनिते॰ चत्वारिवाक्॰ गर्भा
धानादिसंस्कारासिद्ध्यर्थंपंचदशप्रणवावृत्तीः करिष्ये॥ ॐ॰ ॥१६॥ रक्तांभोधि॰ प्राणशक्तिः परा

नः ॥ अथानंतपूजा ॥ ततस्तुमूलमंत्रेणनमस्कृत्यजनार्दनम् ॥ नवाम्रपल्लवाभासंपिंगलश्मश्रु लोचनम् ॥ पीतांबरधरंदेवंशंखचक्रगदाधरम् ॥ अलंकृतंसमुद्रस्थंविश्वरूपंविचिंतये॥ध्यायामि॥ आगच्छानंतदेवेशतेजोराशेजगत्पते ॥ इमांमयाकृतांपूजांगृहाणपुरुषोत्तम ॥ सहस्रशीर्षा० ॥ आवाहनम् ॥ नानारत्नसमायुक्तंकार्तस्वरविभूषितम् ॥ आसनंदेवदेवेशगृहाणपुरुषोत्तम ॥ पुरुष० ॥ आसनं० ॥ गंगादिसर्वतीर्थेभ्योमयाप्रार्थनयाहृतम्॥तोयमेतत्सुखस्पर्शंपाद्यार्थंप्रतिगृह्यताम् ॥ एतावा० पाद्यं० ॥ अनंतानंतदेवेशअनंतफलदायक ॥ अनंतानंतरूपोसिगृहाणार्घ्यंनमोस्तुते ॥ त्रिपादू० ॥ अर्घ्यं० ॥ गंगोदकंसमानीतंसुवर्णकलशेस्थितम् ॥ आचम्यतांहृषीकेशप्रसीदपुरुषोत्तम ॥ तस्माद्वि० ॥ आचम० ॥ अनंतगुणरूपायविश्वरूपधरायच ॥ नमोऽमहात्मदेवायअनंतायनमोनमः ॥ यत्पुरु० ॥ स्नानं०॥ ततः पंचामृतस्नानं० ॥ सुरभेस्तुसमुत्पन्नंदेवानामपिदुर्लभम् ॥ पयोददामिदेवेशस्नानार्थंप्रतिगृह्यताम् ॥ आप्यायस्व० ॥ पयःस्नानम्॥ चंद्र

मंडलसंकाशंसर्वदेवप्रियंहियत् ॥ ददामिदधिदेवेशस्नानार्थंप्र० ॥ दधिक्राव्णो० ॥ दधिस्नानं० ॥
आज्यंसुराणामा० आज्यंपवित्रंपरमंस्नानार्थंप्र० ॥ घृतंमिमिक्षेघृतमस्ययोनिर्घृतेश्रितोघृतम
स्य० ॥ घृतस्नानं० ॥ सर्वौषधिसमुत्पन्नंपीयूषसदृशंमधु ॥ स्नानायतेमयादत्तंगृहाणपरमेश्वर ॥
मधुवाता० मधु० ॥ इक्षुदंडसंमुद्भूतांशर्करांमधुरांशुभाम् ॥ स्नानायतेमयादत्तांगृहाणपरमेश्वर ॥
स्वादुः पवस्वेतिशर्करा० ॥ शुद्धोदकस्नानं० ॥ नाममंत्रैः पूर्वपूजांकुर्यात् ॥ पुरुषसूक्ते
नाभिषेकः ॥ तप्तकांचनवर्णाभंकौशेयंचसुनिर्मितम् ॥ वस्त्रंगृहाणदेवेशलक्ष्मीयुक्तनमोस्तुते ॥
तंयज्ञं० वस्त्रं ॥ वस्त्रानंतरमाचमनं० दामोदरनमस्तेस्तुत्राहिमांभवसागरात् ॥ ब्रह्मसूत्रंसोत्त
रीयंगृहाणपुरुषोत्तम ॥ तस्माद्यज्ञा० ॥ यज्ञोप० ॥ यज्ञोपवीतानंतरमाचमनीयम् ॥ श्रीखंडं०
तस्माद्यज्ञात्सर्वहुत० ॥ चंदनम् ॥ अक्षताश्चसु० ॥ अक्षतान् ॥ माल्यादीनिसुगंधीनि० ॥
तस्मादश्वा० पुष्पाणि० ॥ अथग्रंथिपूजा ॥ श्रियैन० ॥ मोहिन्यैन० ॥पद्मिन्यै० ॥ महाबलायै० ॥

अजायै० ॥ मंगलायै० ॥ वरदायै० ॥ शुभायै० ॥ जयायै० ॥ विजयायै० ॥ जयंत्यै० ॥ पाप नाशिन्यै० ॥ विश्वरूपायै० ॥ सर्वमंगलायै० ॥ १४ ॥ इतिग्रंथिपूजा ॥ अथांगपूजा ॥ मत्स्यायनमः ॥ पादौपूजयामि ॥ कूर्माय० गुल्फौपू० ॥ वराहाय० ॥ जानुनीपू० ॥ नारसिंहाय० ॥ ऊरूपू० ॥ वामनाय० ॥ कटीपू० ॥ रामाय० ॥ ॥ उदरंपूजयामि ॥ श्रीरामाय हृदयंपू० ॥ कृष्णाय मुखंपू ॥ सहस्रशिरसे० ॥ शिरः पू०॥ श्रीमदनंताय०॥ सर्वांगं पू०॥ अथावरणपूजा ॥ अनंतस्यदक्षिणपार्श्वेरमायै० ॥ वामपार्श्वेभूम्यै० ॥ इतिप्रथमावरणम्।आवरणदेवतामावाह्यहस्तंप्रक्षाल्य ॥ गंधपुष्पंतर्जनीमध्यमांगुष्ठैर्धृत्वा ॥ मध्येशंखोदकंगृहीत्वामंत्रांतेशंखोदकंभूमौनिक्षिप्यपुष्पंदेवोपरिनिक्षिपेत् ॥ दयाब्धेत्राहिसंसारसर्पान्मांशरणागतम् ॥ भक्त्यासमर्पयेतुभ्यंप्रथमावरणार्चनम् ॥ इतिमंत्रमुच्चार्यजलंत्यक्त्वापुष्पंदेवोपरिन्यसेत् ॥ एवमग्रेपि ॥ १ ॥ पूर्वादिक्रमेण वृद्धोल्काय० ॥ महोल्काय० ॥ शतोल्का० ॥ सहस्रो

एवमग्रेऽपि ॥ १ ॥ पूर्वादिक्रमेण वृद्धोल्काय० ॥ महोल्काय० ॥ शतोल्का० ॥ सहस्रो



ल्काय० ॥ दयाब्धेत्रा० द्वितीयावरणार्चनम् ॥ २ ॥ तथैव ॥ वासुदेवाय० ॥ संकर्षणाय०॥
प्रद्युम्नाय० ॥ अनिरुद्धाय० ॥ दयाब्धे० ॥ तृतीयावरणार्चनम् ॥ ३ ॥ प्राच्याम् ॥ केशवा०॥
नारायणा० ॥ माधवा० ॥ गोविंदा० ॥ मधुसूदना० ॥ त्रिविक्रमा० ॥ वामना० ॥श्रीधराय० ॥
हृषीकेशाय० ॥ पद्मनाभाय० ॥ दामोदरा० ॥ दयाब्धे० चतुर्थावरणार्चनम् ॥ ४ ॥ पूर्वादि
क्रमेण ॥ मत्स्याय० ॥ कूर्माय०॥ वराहाय० ॥ नारसिंहायनमः॥वामनायनमः ॥ परशुरामायन
मः ॥ श्रीरामायनमः ॥ कृष्णाय० ॥ बौद्धाय० ॥ कल्कये० ॥ अनन्तायनमः ॥ विश्वरूपिणे
न० ॥ दयाब्धेत्रा० पंचमावरणार्चनम् ॥ ५ ॥ पूर्वादिक्रमेण ॥ अनन्तायनमः॥ दक्षिणस्यां ब्रह्मणे
नमः ॥ पश्चिमायांवायवेनमः ॥ उत्तरस्यामीशानायनमः ॥आग्नेय्यांवारुण्यैनमः॥नैऋत्यांगाय
त्र्यैनमः ॥ वायव्यांभारत्यैनमः ॥ ऐशान्यांगिरिजायैनमः ॥ अग्रेगरुडायनमः ॥ वामेसुपुण्याय
नमः ॥ दयाब्धेत्राहिसं० षष्ठावरणार्चनम् ॥ ६ ॥ ॥ पूर्वादिक्रमेण ॥ इन्द्रायनमः ॥ अ

ग्नयेनमः ॥ यमायनमः ॥ निर्ऋतयेनमः ॥ वरुणायनमः ॥ वायवेनमः ॥ सोमायनमः ॥ ईशाना यनमः ॥ दयाब्धेत्रा० सप्तमाव० ॥ ७ ॥ आग्नेय्यांशेषायनमः ॥ नैर्ऋत्यांविष्णवेनमः ॥ वायव्यांविधयेनमः ॥ ऐशान्यांप्रजापतयेनमः ॥ दयाब्धेत्राहि०अष्टमावरणार्चनम् ॥ ८ ॥ आग्नेय्यां गणपतये० ॥ नैर्ऋत्यांसप्तमातृभ्योनमः ॥ वायव्यांदुर्गायैनमः ॥ ऐशान्यांक्षेत्राधिपतये० ॥ दयाब्धेत्रा० नवमावरणा० ॥ ९ ॥ मध्येब्रह्मणे० ॥ भास्कराय० ॥ शेषाय० ॥ सर्वव्यापिने० ॥ ईश्वराय० ॥ विश्वरूपायनमः ॥ महाकायायनमः ॥ सृष्टिकर्त्रेनमः ॥ कृष्णायनमः ॥ हरये नमः ॥ शिवायनमः ॥ स्थितिकारकायनमः ॥ अन्तकायनमः ॥ दयाब्धेत्राहिसं० दशमावरणार्चनम् ॥ १० ॥ शौरयेनमः ॥ वैकुण्ठायनमः ॥ महाबलायनमः ॥ पुरुषोत्तमायनमः ॥ अजायनमः ॥ पद्मनाभायनमः ॥ मङ्गलायनमः ॥ हृषीकेशायनमः ॥ वरदायनमः ॥ माधवाय नमः ॥ मधुसूदनायनमः ॥ अच्युतायनमः ॥अनन्तायनमः॥ गोविन्दायनमः॥विजयायनमः ॥

नमः ॥ मधुसूदनायनमः ॥ अच्युतायनमः ॥अनन्तायनमः॥ गोविन्दायनमः॥विजयायनमः ॥



अपराजितायनमः ॥ कृष्णायनमः ॥ दयाब्धेत्राहिसं० एकादशावरणार्चनम् ॥ ११ ॥ अनंता
यनमः ॥ कपिलायनमः ॥ शेषायनमः ॥ संकर्षणायनमः ॥ हलायुधायनमः ॥तारणायनमः॥
सीरपाणयेनमः ॥ बलभद्रायनमः ॥ दयाब्धेत्राहिसं० द्वादशावरणार्चनम् ॥१२॥ क्षीराब्धिशा
यिनेनमः ॥ अच्युतायनमः ॥ भूम्याधारायनमः ॥ लोकनाथायनमः ॥ फणामणिविभूषणायन
मः ॥ सहस्रमूर्ध्नेनमः ॥ सहस्रार्चिषेनमः ॥ दयाब्धेत्राहिसं० त्रयोदशावरणार्चनम् ॥ १३ ॥
केशवादिचतुर्विंशतिनामभिः ॥ दयाब्धेत्राहि० चतुर्दशावरणार्चनम् ॥ १४ ॥ ॥ अथपत्र
पूजा ॥ ॥ कृष्णायनमः ॥ पलाशपत्रंस० ॥ विष्णवेनमः॥ औदुंबरपत्रंसमर्पयामि ॥ हरयेनमः
अश्वत्थपत्रं स० ॥ शंभवे० ॥ भृंगिराजपत्रंसमर्पयामि ॥ ब्रह्मणे० ॥ जटाधारपत्रंसम० ॥
भास्कराय ० ॥ अशोकपत्रंसमर्पयामि ॥ शेषायनमः ॥ कपित्थपत्रंसमर्पयामि ॥ सर्वव्यापि
नेनमः ॥ वटपत्रंसमर्पयामि ॥ ईश्वरायनमः ॥ आम्रपत्रंसमर्पयामि ॥ विश्वरूपिणे० ॥ कदली

पत्रंसम० ॥ महाकायायनमः॥ अपामार्गपत्रंसमर्पयामि ॥ सृष्टिकर्त्रे०॥ करवीरपत्रंसमर्पयामि॥ स्थितिकर्त्रेनमः ॥ पुन्नागपत्रंसमर्पयामि ॥ अंतकायनमः ॥ नागवल्लीपत्रंसमर्पयामि ॥ अथपुष्पपूजा ॥ ॥ अनंतायनमः ॥ पद्मपुष्पंसमर्पयामि॥ विष्णवेनमः॥ जातीपुष्पंसमर्पयामि ॥ अव्ययायनमः ॥ कह्लारपुष्पं समर्पयामि ॥ सहस्राजितेनमः ॥ केतकीपुष्पंसमर्पयामि ॥ अनंतरूपिणेनमः॥ बकुलपुष्पंसमर्पयामि ॥ इष्टायनमः ॥ शतपुष्पंसमर्पयामि ॥ विशिष्टायनमः ॥ पुन्नागपुष्पंसमर्पयामि ॥ शिष्टेष्टायनमः ॥ करवीरपुष्पंसमर्प०॥ शिखंडिनेनमः॥ धत्तूरपुष्पंसमर्पयामि ॥ नहुषायनमः ॥ कुन्दपुष्पंसमर्पयामि ॥ विश्वबाहवेनमः ॥ मल्लिकापु० ॥ महीधरायनमः ॥ मालतीपुष्पंसमर्पयामि ॥ अच्युतायनमः ॥ कर्णिकारपुष्पंसमर्पयामि ॥ अन्तकायनमः ॥ कदलीपुष्पंसमर्पयामि ॥ १४ ॥ अथाऽष्टोत्तरशतनामभिः पूजयेत् ॥ अनन्तायनमः ॥ अच्युतायनमः ॥ अद्भुतकर्मणेनमः ॥ अमितविक्रमायनमः ॥ अपराजितायनमः ॥ अखण्डायनमः ॥ अग्निनेत्रायनमः ॥ अग्निवपुषेनमः ॥ अदृश्यायनमः ॥ अत्रिपुत्राय

नमः ॥ अखण्डायनमः ॥ अग्निनेत्रायनमः ॥ अग्निवपुषेनमः ॥ अदृश्यायनमः ॥ अत्रिपुत्राय



नमः ॥ १० ॥ अनन्तकुलायनमः ॥ अनाशिनेनमः ॥ अनघायनमः ॥ अब्दनीलायनमः ॥
अहरहायनमः ॥ अष्टमूर्तयेनमः ॥ अनिरुद्धायनमः ॥ अनिर्विष्टायनमः ॥ अचञ्चलायनमः ॥
शब्दातिगायनमः ॥ २० ॥ अचलरूपायनमः ॥ अखिलधरायनमः ॥ अव्यक्तायनमः ॥
अनुरूपायनमः ॥ अभयंकरायनमः ॥ अक्षतायनमः ॥ अवपुषेनमः ॥ अयोनिजायनमः ॥
अरविन्दायनमः ॥ अशनवर्जितायनमः ॥ ३० ॥ अधोक्षजायनमः ॥ अदितिपुत्रायनमः ॥
अम्बिकापतिपूर्वजायनमः ॥ अपस्मारनाशिनेनमः ॥ अव्ययायनमः ॥ अनादयेनमः ॥
अप्रमेयायनमः ॥ अघशत्रवेनमः ॥ अमरारिघ्नायनमः ॥ अनीश्वरायनमः ॥ ४० ॥ अजाय
नमः ॥ अघोरायनमः ॥ अनादिनिधनायनमः ॥ अमरप्रभवेनमः ॥ अग्राह्यायनमः ॥ अक्रूराय
नमः ॥ अनुत्तमायनमः ॥ अरूपायनमः ॥ अर्हतेनमः ॥ अमोघाधिपतयेनमः ॥ ५० ॥ अजा
यनमः ॥ अक्षमायनमः ॥ अमृतायनमः ॥ अघोरवीर्यायनमः ॥ अव्यंगायनमः ॥ अविघ्नाय
नमः ॥ अतींद्रियायनमः ॥ अमिततेजसेनमः ॥ अमितयेनमः ॥ अष्टमूर्तयेनमः ॥ ६० ॥ अ

निलायनमः ॥ अवशायनमः ॥ अणोरणीयसेनमः ॥ अशोकायनमः ॥ अरविंदाक्षायनमः ॥ अधिष्ठानायनमः ॥ अमितनयनायनमः ॥ अरण्यवासिनेनमः ॥ अप्रमत्तायनमः ॥ अनंतरूपायनमः ॥ ७० ॥ अनलायनमः ॥ आनिमिषायनमः॥ अग्ररूपायनमः॥ अग्रगण्यायनमः॥ अप्रमितायनमः ॥ अनंतकायनमः ॥ अचिंत्यायनमः ॥ अपांनिधयेनमः ॥ अतिसुंदरायनमः ॥ अमरप्रियायनमः ॥ ८० ॥ अष्टसिद्धिप्रदायनमः ॥ अरविंदप्रियायनमः ॥ अरविंदोद्भवायनमः ॥ अनयायनमः ॥ अर्थायनमः ॥ अक्षोभ्यायनमः ॥ अर्चिष्मतेनमः ॥ अनेकमूर्तयेनमः॥ अनंतब्रह्मांडपतयेनमः ॥ अनंतशयनायनमः ॥ ९० ॥ अमराधिपतयेनमः ॥ अनाधारायनमः॥ अनंतनाम्नेनमः ॥ अनंताश्रियेनमः ॥ अक्षरायनमः ॥ अमायायनमः ॥ आश्रमस्थानायनमः ॥ आश्रमातीतायनमः ॥ अन्नदायनमः ॥ आत्मयोनयेनमः ॥ १०० ॥ अवनीपतयेनमः ॥ अवनिधरायनमः ॥ अनादयेनमः ॥ आदित्यायनमः ॥ अमृतायनमः ॥ अपवर्गप्रदायनमः ॥ अव्यक्तायनमः ॥ अनंतायनमः ॥ १०८ ॥ इत्यष्टोत्तरशतनामपूजा ॥ दशांगंगुग्गुलघृतंचंद

नागरुसंयुतम् ॥ सर्वेषामुत्तमंधूपंगृहाणसुरपूजित ॥ यत्पुरुषं० ॥ धूपं० ॥ साज्यंचवर्तिसंयुक्तंव
ह्निनायोजितंमया ॥ दीपंगृहाणदेवेश त्रैलोक्यतिमिरापह ॥ ब्राह्मणोस्य० ॥ दीपं० ॥ अन्नंच
तुर्विधंस्वादुपयोदधिघृतैर्युतम् ॥ नानाव्यंजनशोभाढ्यंनैवेद्यंप्रतिगृह्यताम् ॥ चन्द्रमामनसो० ॥
नैवेद्यं० ॥ नैवेद्यमध्येपानीयं० ॥ उत्तरापोशनार्थंतेदत्तंतोयंसुवासितम् ॥ गृहाणसुमुखोभूत्वा
अनन्तायनमोनमः ॥ उत्तरापोशनम् ॥ ॥ मुखप्रक्षालनं० ॥ हस्तप्रक्षालनं० ॥ करोद्वर्तनकंदे
वमयादत्तंहिभक्तितः ॥ चारुचन्द्रप्रभंदिव्यंगृहाणजगदीश्वर ॥ करोद्वर्तनं० ॥ इदंफलंमयादेव
स्थापितंपुरतस्तव ॥ तेनमेसफलावाप्तिर्भवेज्जन्मनिजन्मनि ॥ नालिकेरफलं० ॥ पूगीफलंम
हद्दिव्यंनागवल्ल्यादलैर्युतम् ॥ कर्पूरैलासमायुक्तंताम्बूलम्प्रतिगृह्यताम् ॥ तांम्बूलंस० ॥ हिरण्य
गर्भांतिदक्षिणाम्० ॥ यानिकानिचपापानिजन्मांतरकृतानिच ॥ तानितानिविनश्यंतिप्रद
क्षिणपदेपदे ॥ नाभ्याआसीदितिप्रदक्षिणाम् ॥ नमस्तेभगवन्भूयोनमस्तेधरणीधर ॥ नमस्ते
सर्वनागेंद्रनमस्तेमधुसूदन ॥ सप्तास्योतिनमस्कारम् ॥ नमस्तेदेवदेवेशनमस्तेगरुडध्वज ॥ नम

स्तेकमलाकांतअनन्तायनमोनमः ॥ यज्ञेनयज्ञमितिमन्त्रपुष्पम् ०॥ ॥अथदोरकप्रार्थना ॥ ॥ अनन्तायनमस्तुभ्यंसहस्रशिरसेनमः ॥ नमोस्तुपद्मनाभायनागानांपतयेनमः ॥ अनंतकामदःकामाननंतोमेप्रयच्छतु ॥ अनंतोदोररूपेणपुत्रपौत्रान्प्रवर्धतु ॥ इतिप्रार्थ्यदोरकंगृहीत्वा ॥ ॥ अथदोरकबन्धनमन्त्रः ॥ ॥ अनन्तसंसारमहासमुद्रमग्नंसमभ्युद्धरवासुदेव॥अनन्तरूपेविनियोजयस्वह्यनन्तसूत्रायनमोनमस्ते ॥ ॥ इतिबध्नीयात् ॥ जीर्णदोरकविसर्जनमन्त्रः ॥ ॥ नमः सर्वहितानन्तजगदानन्दकारक ॥ जीर्णदोरममुंदेवविसृजेहंत्वदाज्ञया ॥ ॥ इतिविसृजेत् ॥ ॥ अथवायनमन्त्रः ॥ ॥ गृहाणेदंद्विजश्रेष्ठवायनंदक्षिणायुतम् ॥ त्वत्प्रसादादहंदेवमुच्येयंकर्मबन्धनात् ॥ प्रतिगृह्णद्विजश्रेष्ठअनन्तफलदायक ॥ पक्वान्नफलसंयुक्तंदक्षिणाघृतसंयुतम् ॥ वायनंद्विजवर्यायदास्यामिव्रतपूर्तये ॥ अथजीर्णदोरकदानमंत्रः ॥ अनंतःप्रतिगृह्णातिअनंतोवैददातिच ॥ अनंतस्तारकोभाभ्यामनंतायनमोनमः ॥ इतिदद्यात् ॥ ततोयथाशक्तिब्राह्मणान् भोजयेत् ॥ अनेनकृतपूजनेनश्रीमदनंतः प्रीयताम् ॥ ॥ इतिपूजाविधिः समाप्तः ॥ ॥

भोजयेत् ॥ अनेनकृतपूजनेनश्रीमदनंतः प्रीयताम् ॥ ॥ इतिपूजाविधिः समाप्तः ॥ ॥



अथ कथा ॥ पुराणके वक्ता श्रीसूतजी नैमिषारण्यमें शौनकादि ऋषियोंसे कहतेहैं कि, भो ऋषिगणो ! सावधानहोके पूर्ववृत्तान्त श्रवण करो एकसमय गंगाजीके निकटमें धर्म्महीहै पराक्रम जिसका ऐसा राजा युधिष्ठिर जरासंधके वधके अर्थ राजसूयनामक यज्ञको प्रारम्भ करता भया ॥ १ ॥ वह युधिष्ठिर कृष्ण

अथकथा ॥ सूतउवाच ॥ पुरातुजाह्नवीतीरेधर्मोधर्मपरायणः ॥ जरासंधवधार्थायराजसूयमुपाक्रमत्॥ १ ॥कृष्णेनसहधर्मोसौभीमार्जुनसमन्वितः ॥ यज्ञशालामकुरुतनानारत्नोपशोभिताम्॥२॥मुक्ताफलसमाकीर्णामिंद्रालयसमप्रभाम्॥यज्ञार्थंभूपतीन्सर्वान्समानीयप्रयत्नतः॥३॥

भीमसेन अर्जुनके सहित बहुतप्रकारसे रत्नोंको लगाकर यज्ञस्थानको करताभया ॥ २ कैसा वह स्थानहै मोतीके समान प्रकाश कांतिवाला इन्द्रभवनके सदृश शोभावाला यज्ञशालाको देखा और विचार करके युधिष्ठिरने यज्ञके निमित्त संपूर्ण पृथ्वीपतियोंको यत्नसे बुलाया ॥ ३ ॥

उस समयमें गांधारीका पुत्र कुरुके वंशमें उत्पन्न शोभायमान दुर्योधनराजा यज्ञशालामें आवता भया ॥ ४ ॥ वह दुर्योधन जलसे भराहुआ आंगनको देखकर वस्त्रोंको उठाकर धीरे धीरे आया ॥ ५ ॥ उसको देख कर द्रौपदीआदि वरांगनाओंने हँसी किया तब तो वह दुर्योधन चलते २ जलमध्यमें गिरता भया ॥ ६ ॥

गांधारीतनयोराजातदानींनृपनंदनः ॥ दुर्योधनइतिख्यातःसमागच्छन्मखालयम् ॥ ४ ॥
दृष्ट्वादुर्योधनस्तत्रप्रांगणंजलसन्निभम् ॥ ऊर्ध्वंकृत्वातुवस्त्राणितत्रागच्छच्छनैःशनैः ॥ ५ ॥
स्मितवक्त्राश्चतंदृष्ट्वाद्रौपद्यादिवरांगनाः ॥ दुर्योधनस्ततोगच्छजलमध्येपपातह ॥ ६ ॥
पुनःसर्वेनृपाश्चैवऋषयश्चतपोधनाः ॥ उपहासंचचक्रुस्ताद्रौपद्यादिसुलोचनाः ॥ ७ ॥

जब जलमें गिरपडा तब संपूर्ण राजा और तप है धन जिन्होंका ऐसे ऋषि तथा अच्छे नेत्रवाली द्रौपदीआदि स्त्रियोंने दुर्य्योधनका उपहास किया ॥ ७ ॥

बडेबडे राजाओंका राजा दुर्योधन महाक्रोधसे युक्त हस्तिनापुरको शकुनीनाम मामाके सहित लौटता भया ॥ ८ ॥ उसीसमयमें शकुनी दुर्य्योधन प्रति मधुरवचनको बोला हे राजन् ! तू महान् क्रोधको त्याग कार्य्यकेहेतुसे अपनेको बहुतसे कार्य्योंका साधन करना है ॥९॥ द्यूत कहिये जुवाकें खेलनेसे संपूर्ण राज्यको तू प्राप्तहोगा

महाराजाधिराजोसौमहाक्रोधपरायणः ॥ विनिर्गतःस्वकंराष्ट्रंमातुलेनवृतोनृपः ॥८॥ तस्मिन्कालेतुशकुनिःप्रोवाचमधुरंवचः ॥ मुंचराजन्महारोषंपुरतः कार्यगौरवात् ॥ ९ ॥ द्यूतोपक्रमणेनैवसर्वंराज्यमवाप्स्यसि ॥ गंतुमुत्तिष्ठराजेंद्रसत्रस्यसदनंप्रति ॥१०॥ तथेत्युक्त्वामहाराजःसमागच्छन्मखालयम् ॥ विनिवृत्यमखंजग्मुर्नृपाःसर्वेस्वकंपुरम् ॥ ११ ॥

हे राजेन्द्र ! यज्ञशालाको चलनेकी इच्छा हो तो उठ ॥१०॥ ऐसे वचन सुन बोला ठीक है तब दुर्योधन यज्ञशालाको आवताभया इतनेमें संपूर्ण राजा यज्ञको समाप्त करके अपने २ नगरोंको जातेभये ॥ ११ ॥

उसके अनंतर वह राजा दुर्योधन हस्तिनापुरको आवताभया और युधिष्ठिर भीमसेन तथा अर्जुन उन्होंको बुलाकर ॥ द्यूत कहिये जुवाका आरम्भ किया और कपटसे अपने राज्यको प्राप्तहोता भया जुवासे जीते गए संपूर्ण पांडुपुत्र दुःखसे परिपूर्ण ॥ १२ ॥ १३ ॥ वनमें जाकरवनचारीहोकर घूमने लगे, यह वृत्तान्त

ततोदुर्योधनोराजासमागत्यगजाह्वयम् ॥ आनीयपांडुपुत्रांश्चधर्मभीमार्जुनान्वरान् ॥ १२ ॥ द्यूतारंभंचाकुरुतस्वंराज्यंप्राप्तवांस्ततः ॥ द्यूतेनैवाजिताःसर्वेपांडवावीतकल्मषाः ॥१३॥ ततोरण्यांतरेगत्वावर्ततेवनचारिणः॥ततोवृत्तांतमाकर्ण्यभ्रातृभिःसहपांडवम् ॥ युधिष्ठिरंद्रष्टुमनाः कृष्णोगाज्जगदीश्वरः ॥ १४ ॥ सूतउवाच ॥ ॥ अरण्येवर्तमानास्तेपांडवादुःखकर्शिताः ॥ कृष्णंदृष्ट्वामहात्मानंप्रणिपत्यतमब्रुवन् ॥ १५ ॥

सुनकर जगत्के ईश्वर कृष्णजी भाइयोंके सहित युधिष्ठिरको देखनेकी इच्छाकर वनको जाते भये ॥ १४ ॥ सूतजी बोले कि हे ऋषियो ! वनमें वर्त्तमान वे दुःखसे दुर्बल पांडुके पुत्र महात्मा कृष्णको देखकर दंडवत कर बोले ॥ १५ ॥

दंडवत् कर बोले ॥ १५ ॥



युधिष्ठिरने कहा कि, हे जगदीश्वर! भाइयोंके सहित मैं दुःखमें प्राप्तहूं और अनंत दुःखवाले समुद्रसे हमलोकोंको छूटनेका उपाय कौनहै सो कृपाकरि कहौ ॥ १६ ॥ हे भगवन् ! किस देवताकी पूजाको करें उससे अपनी उत्तम राज्यको प्राप्तहूं अथवा कौनसे व्रत करनेसे आपके प्रसादसे

युधिष्ठिर उवाच ॥ ॥ अहंदुःखीहसंजातोभ्रातृभिःपरिवारितः ॥कथंमुक्तिर्भवेदास्माकमनंताद्दुःखसागरात् ॥ १६ ॥ कंदेवंपूजयिष्यामिराज्यंप्राप्स्याम्यनुत्तमम् ॥ अथवाकिंव्रतंकुर्यांत्वत्प्रसादाद्भवेद्धितम् ॥ १७ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ अनंतव्रतमस्त्येकंसर्वपापहरंशुभम् ॥ सर्वकामप्रदंनृणांस्त्रीणांचैवयुधिष्ठिर ॥ १८ ॥

मेरा हित होवे ॥ १७ ॥ तब श्रीकृष्णजी बोले कि, हे युधिष्ठिर ! पुरुषोंके तथा स्त्रियोंके संपूर्ण पातक हरनेवाला और सर्व मनोरथ परिपूर्ण करनेवाला दिव्य एक अनंतजीका व्रत है. उसको मैं कहताहूँ ॥ १८ ॥

भाद्रपद महीनेके शुक्लपक्षमें चतुर्दशीके दिन व्रत होता है उस व्रतके करनेसे संपूर्ण पाप नाश होजाते हैं ॥ १९ ॥ तब तो युधिष्ठिर बोले कि, हे कृष्ण ! अनंत कौन है जिनको आपने कहा; क्या शेष नाग है अथवा क्या तक्षक सर्प अनंत कहाजाता है ॥ २० ॥ अथवा परमात्माको अनंत कहते हैं या परब्रह्मको

शुक्लपक्षेचतुर्दश्यांमासिभाद्रपदेभवेत् ॥ तस्यानुष्ठानमात्रेणसर्वपापंव्यपोहति ॥ १९ ॥ ॥ युधिष्ठिर उवाच ॥ कृष्णकोयमनंतेतिप्रोच्यतेयस्त्वयाविभो ॥ किंशेषनागआहोस्विदनंतस्तक्षकस्स्मृतः ॥ २० ॥ परमात्माथवानंतउंताहोब्रह्मगीयते ॥ कएषोनंतसंज्ञोवै तथ्यंमेब्रूहिकेशव ॥ २१ ॥ श्रीकृष्णउवाच ॥ अनंतइत्यहंपार्थममरूपंनिबोधथ ॥ आदित्यादिग्रहात्मासौयःकालइतिपव्यते ॥ २२ ॥

हे केशव ! कौन यह अनंत है कृपा करिके हमारे अर्थ यथार्थ कहो ॥ २१ ॥ तब तो श्रीकृष्णजी बोले कि, हे युधिष्ठिर ! अनंत यह मैं हूं सूर्यादि ग्रह और यह आत्मा और जो काल कहा जाताहै ये सब हमाराही रूप जानो ॥ २२ ॥

कि, हे युधिष्ठिर ! अनंत यह मैं हूं सूर्यादि ग्रह और यह आत्मा और जो काल कहा जाताहै ये सब हमा राही रूप जानो ॥ २२ ॥





अर्धघटिका एक घटिका दो घटिका दिन रात्रि पक्ष मास ऋतु वर्ष युग और शरीरवान् यह सर्व काल कहाताहै ॥ २३ ॥ जो यह काल मैंने कहा वही अनंत इस नामसे कहा जाताहै वही काल रूप अनंत मैं कृष्ण अवतार धारणकर पृथ्वीका भार उतारनेके अर्थ ॥ २४ ॥ हे युधिष्ठिर ! और

कलाकाष्ठामुहूर्तादिदिनरात्रिशरीरवान् ॥ पक्षमासर्तुवर्षादियुगकालव्यवस्थया ॥ २३॥ योयं कालोमयाख्यातःसोनंतइतिकीर्त्यते ॥ सोहंकृष्णोवतीर्णोत्रभूभारोत्तारणायच ॥ २४ ॥ दानवानांवधार्थायवसुदेवकुलोद्भवम् ॥ मांविद्धिसततंपार्थसाधूनांपालनायच ॥ २५ ॥ अनादिमध्यनिधनंकृष्णंविष्णुंहरिंशिवम् ॥ वैकुंठंभास्करंसोमंसर्वव्यापिनमीश्वरम् ॥ २६ ॥ विश्वरूपंमहाकालंसृष्टिसंहारकारकम् ॥ प्रत्ययार्थंमहारूपंफाल्गुनायप्रदर्शितम् ॥ २७ ॥

दुष्टोंको नाश करनेके अर्थ तथा साधुओंकी रक्षा करनेके अर्थ वसुदेवके वंशमें उत्पन्न मुझको तुम जानो ॥ २५ ॥ नहीं है आदि मध्य और नाश जिसका कृष्ण विष्णु हरि शिव वैकुंठ सूर्य चंद्र सर्वव्यापी ईश्वर ॥ २६ ॥ तथा संसाररूप महाकाल सृष्टि नाशकर्ता इत्यादि रूपोंको मैंने ज्ञानके अर्थ अर्जुनको

दिखलायाहै ॥ २७ ॥ हे युधिष्ठिर ! योगियों करके ध्यान करने योग्य और संसारका रूप तथा अनंत जिसमें चतुर्दश इन्द्र रहतेहैं ऐसे रूपको अर्जुनने यही देखाहै ॥ २८ ॥ अष्टवसु द्वादश कहिये बारह सूर्य एकादश रुद्र और नारदादि सात ऋषि तथा समुद्र और विंध्याचलादि पर्वत गंगाआदि नदी

पूर्वमेवमहाबाहोयोगिध्येयमनुत्तमम् ॥ विश्वरूपमनंतंचयस्मिन्निन्द्राश्चतुर्दश ॥ २८ ॥ वसवोद्वादशादित्यारुद्राएकादशस्मृताः ॥ सप्तर्षयःसमुद्राश्चपर्वताःसरितोत्तमाः ॥ २९ ॥ नक्षत्राणिदिशोभूमिःपातालंभूर्भुवादिकम् ॥ माकुरुष्वात्रसंदेहंसोहंपार्थनसंशयः ॥ ३० ॥ ॥

तथा वृक्ष ॥ २९ ॥ और नक्षत्र तथा दशों दिशा भूमि पाताल भूलोक भुवः लोक इत्यादि लोक सब उस विश्वरूपमें हैं हे युधिष्ठिर ! इस विषयमें सन्देह मतकरो काहेसे वह विश्वरूप मैं हूं इसमें संशय नहींहै ॥ ३० ॥

नहींहै ॥ ३० ॥



यह सुन युधिष्ठिर बोले कि, हे कृष्ण ! अनंतव्रतकी विधि और व्रतका माहात्म्य तथा क्या पुण्यहै क्या फल है इस व्रतका क्या दानहै किसका पूजनहै ॥ ३१ ॥ किसने आदिमें कहा किसने इस मर्त्यलोकमें प्रकाश किया इस प्रकारसे विस्तारपूर्वक संपूर्ण अनंतव्रतके वृत्तांतको मेरे प्रति

युधिष्ठिरउवाच ॥ अनंतव्रतमाहात्म्यंविधिंवदविदांवर ॥ किंपुण्यंकिंफलंचास्यकिंदानंकस्यपूजनम् ॥ ३१ ॥ केनचैतत्पुराचीर्णंमर्त्येकेनप्रकाशितम् ॥ एवंसविस्तरंसर्वंब्रूह्यनंतव्रतंमम ३२ श्रीकृष्णउवाच ॥ आसीत्पुराकृतयुगेसुमंतुर्नामवैद्विजः ॥ वासिष्ठगोत्रसंभूतःसुरूपांचभृगोःसुताम् ३३

कहो ॥ ३२ ॥ तब श्रीकृष्णजी बोले कि, हे युधिष्ठिर ! पूर्व सत्ययुगमें वसिष्ठगोत्रमें उत्पन्न सुमंतु नाम द्विज होताभया वह सुमंतु अच्छे रूपवाली भृगुऋषिकी कन्याको ॥ ३३ ॥

जिसका दीक्षा यह नाम है उसके संग वेदोक्त विधिसे विवाह किया हे युधिष्ठिर ! थोडा समय बीतनेपर उस दीक्षाके अनंतलक्षणवाली कन्या उत्पन्न हुई ॥ ३४ ॥ उस कन्याका नाम शीला यह स्थापन भया वह सुशिला पिताके गृहमें बढतीभई कोई समयमें उस सुशीलाकी माता ज्वरसे दुःखित ॥ ३५ ॥ वह दीक्षा नदीके तीरमें मरगई वह पतिव्रताधर्मसे स्वर्गको

दीक्षानाम्नींचोपयेमेवेदोक्तविधिनानृप ॥ तस्याःकालेनसंजातादुहिताऽनंतलक्षणा ॥ ३४ ॥
शीलानाम्नीसुशीलासावर्धतेपितृवेश्मनि ॥ माताचतस्याःकालेनज्वरदाहेनपीडिता ॥ ३५ ॥
विनष्टासानदीतीरेययौस्वर्गंपतिव्रता ॥ सुमंतुस्तुततोन्यां वैधर्मपुंसःसुतांपुनः ॥ ३६ ॥
उपयेमेविधानेनकर्कशांनामनामतः ॥ दुःशीलांकर्कशांचंडींनित्यंकलहकारिणीम् ॥ ३७ ॥

गई उसके अनंतर सुमंतुने धर्म्मपुरुषकी कन्या ॥ ३६ ॥ जिसका नाम कर्कशा था उसके संग विधिपूर्वक विवाह किया जिसका दुष्ट स्वभाव और महाक्रोधवाली और दिन दिन झगडाको करनेवाली थी ॥ ३७ ॥

विधिपूर्वक विवाह किया जिसको दुष्ट स्वभाव और महाक्रोधवाली और दिन दिन झगडाको करनेवाली थी ॥ ३७ ॥





वह शीलानाम सुमंतुकी कन्या पिताके गृहमें भीतपर और खंभापर तथा देहलीपर और तोरण आदिकोंमें गृहार्चनमें चतुर होती भई ॥ ३८ ॥ नीले, पीले, सुफेद, कृष्ण इत्यादि रंगोंसे चित्र विचित्रके स्वस्तिक शंख कमल वारम्वार बनाया करतीथी ॥ ३९ ॥ ऐसेही कार्य्य करनेमें बहुत काल व्यतीत भया बालकप

सापिशीलापितुर्गेहेगृहार्चनपराबभौ ॥ कुड्यस्तंभबहिर्द्वारदेहलीतोरणादिषु ॥ ३८ ॥ वर्णैश्चित्रमकरोन्नीलपीतासितासितैः ॥ स्वस्तिकैःशंखपद्मैश्चसार्चयंतीपुनःपुनः ॥ ३९ ॥ ततः कालेबहुगतेकौमारवशवर्तिनी॥एवंसावर्धतेशीलापितृवेश्मनिमंगला॥४०॥पित्राहृष्टातदातेन स्त्रीचिह्नायौवनेस्थिता ॥ तांदृष्ट्वाचिंतयामासवराननुगुणान्भुवि ॥ कस्मैदेयामयाकन्याविचार्येतिसुदुःखितः ॥ ४१ ॥

नासे इस प्रकारसे वह शीला पिताके गृहमें बढती भई ॥ ४० ॥ वह शीला स्त्रियोंके चिह्न यौवन इत्यादिकोंसे युक्तहुई तब सुमंतुने उसको देखा और चिंतना किया कि, यह कन्या मैं किसको दूं इस विचारसे महादुःखित भया ॥ ४१ ॥

इसी समयमें वेद जाननेवालोंमें श्रेष्ठ और स्त्रीकी इच्छा करनेवाला कान्तियुक्त मुनियोंमें उत्तम कौंडिन्य ऋषि आये ॥४२॥ और बोले कि हे सुमंतु ! तुम्हारी कन्या जो रूपसे युक्त शीलाको मैं मांगताहूं तब तो सुमंतुने शुभदिनमें द्विजोंमें श्रेष्ठ ऐसे कौंडिन्य ऋषिके अर्थ कन्याको दानकरादिया ॥ ४३ ॥ कृष्ण बोले

एतस्मिन्नेवकालेतुमुनिर्वेदविदांवरः ॥ कन्यार्थीचागतःश्रीमान्कौंडिन्योमुनिसत्तमः॥ ४२ ॥ उवाचरूपसंपन्नांत्वदीयांतनयांवृणे ॥ पितादद्दौद्विजेंद्रायकौंडिन्यायशुभेदिने ॥ ४३ ॥ गृह्योक्तविधिनापार्थविवाहमकरोत्तदा ॥ मंगलाचारनिर्घोषंतत्रकुर्वंतियोषितः ॥ ४४ ॥ ब्राह्मणाः स्वस्तिवचनंजयघोषंचबंदिनः ॥ ॥ निर्वर्त्यौद्वाहिकंसर्वंप्रोक्तवान्कर्कशांद्विजः ॥ ४५ ॥

कि, हे युधिष्ठिर ! गृह्यसूत्रकी कहीहुई विधिसे विवाहको किया उस विवाहसमयमें मांगालिक शब्द स्त्रियोंने गान किये ॥ ४४ ॥ और ब्राह्मणलोक स्वस्तिवाचनको पढते हैं तथा बंदीजन कहतेहैं तुम्हारी जय हो इस प्रकारसे सुमंतु विवाहकर्मसे निवृत्त होकर अपनी स्त्री कर्कशासे बोले ॥ ४५ ॥





हे स्त्री ! दामादको कुछ द्रव्यादि पदार्थ संतोषके अर्थ देना चाहिये ऐसा वचन सुनकर कर्कशा क्रोधकर

जय हो इस प्रकारसे सुमंतु विवाहकर्म्मसे निवृत्त होकर अपनी स्त्री कर्कशासे बोले ॥ ४५ ॥



हे स्त्री ! दामादको कुछ द्रव्यादि पदार्थ संतोषके अर्थ देना चाहिये ऐसा वचन सुनकर कर्कशा क्रोधकर घरके संपूर्ण पदार्थोंको एकत्र कर ॥ ४६ ॥ और पेटीमें बांधकर बोली हे जामातः! अपने गृहको जावो और शेष पिष्टकसे उसको कर्कशाने मार्गमें भोजनके अर्थ पदार्थ बना दिया ॥ ४७ ॥

सुमंतुरुवाच ॥ ॥ किंचिद्द्रव्यादिकंदेयंजामातुःपारितोषिकम् ॥ तच्छ्रुत्वाकर्कशाक्रुद्धाप्रोत्सार्यगृहमण्डनम् ॥ ४६ ॥ पेटकेसुस्थिरंबद्ध्वास्वगृहंगम्यतामिति ॥ भोज्यावशिष्टचूर्णेनपाथेयंचचकारसा ॥ ४७ ॥ उवाचवित्तंनैवास्तिगृहेपश्ययदिस्थितम् ॥ तच्छ्रुत्वाविमनाः पार्थसंयतात्मासुनिस्तदा ॥ ४८ ॥

और सुमंतुसे बोली कि, गृहमें धनादि पदार्थ नहीं हैं जो होवें तो देखलो हे युधिष्ठिर ! वह सुमंतु ऐसे वचनोंको सुन महाखेदित हुवा ॥ ४८ ॥

और कौंडिन्य ऋषि युवा अवस्थावाली सुशीला शीलाको विवाह कर बैलगाडीमें बैठा कर मार्गमें धीरे धीरे चले ॥ ४९ ॥ और मार्गमें वह सुमंतु बहती पुण्यरूपी यमुनानदीको देखकर उसके किनारेपर रथको खडा करके शिष्योंको रथ सौंपकर नित्यकर्मोंको करनेके अर्थ जाताभया

कौंडिन्योपिविवाह्यैनांपथिगच्छञ्छनैःशनैः ॥ शीलांसुशीलामादायनवोढांगोरथेनहि॥४९॥
ददर्शयमुनांपुण्यांतामुत्तीर्यतटेरथम् ॥ संस्थाप्यावश्यकंकर्तुंगतः शिष्यान्नियुज्यवै ॥ ५० ॥
मध्याह्नेभोज्यवेलायांसमुत्तीर्यसरित्तटे ॥ ददर्शशीलासास्त्रीणां समूहंरक्तवाससाम् ॥ ५१ ॥
चतुर्दश्यामर्चयंतंभक्त्यादेवंजनार्दनम् ॥ उपगम्य शनैः शीलापप्रच्छ स्त्रीकदंबकम् ॥ ५२ ॥

॥ ५० ॥ और मध्याह्न कहिये दोपहरमें भोजनके समयमें यमुनाके निकट पर उतारकर वह शीला लालवस्त्रोंको धारण कियेहुए बहुतसी स्त्रियोंको देखती भई ॥ ५१ ॥ चतुर्दशीमें भाक्तिपूर्वक जनार्दन भगवानकी पूजा कररही हैं और वह शीलाधीरेसे उन स्त्रियोंके समीप जाकर पूछती भई ॥ ५२ ॥





हे श्रेष्ठ स्त्रियो ! यह क्या कररही हो और इस व्रतका क्या नाम है मेरे अर्थ कृपापूर्वक कहो ऐसे

भगवानकी पूजा कररही हैं और वह शीलाधीरेसे उन स्त्रियोंके समीप जाकर पूछती भई ॥ ५२ ॥



हे श्रेष्ठ स्त्रियो ! यह क्या कररही हो और इस व्रतका क्या नाम है मेरे अर्थ कृपापूर्वक कहो ऐसे वचनोंको सुन शीलही है आभूषण जिसका ऐसी उस शीलासे वे संपूर्ण स्त्री बोलीं ॥ ५३ ॥ हे शीले ! यह अनंत नामका व्रत है इस व्रतमें अनंतदेवकी पूजा होती है ऐसे वचनोंको सुन वह शीला बोली कि, मैंभी इस उत्तम व्रतको करूंगी ॥ ५४ ॥ और स्त्रियोंसे पूछती भई कि, इस व्रतका क्या विधान है और

आर्याःकिमेतन्मेब्रूतकिन्नामव्रतमीदृशम् ॥ ताऊचुर्योषितस्तांतुशीलांशीलविभूषणाम् ॥५३॥
अनंतव्रतमेतद्धिव्रतेनंतस्तुपूज्यते ॥ साब्रवीदहमप्येतत्करिष्येव्रतमुत्तमम्॥ ५४॥ विधानंकी
दृशंतत्रकिंदानंकोत्रपूज्यते ॥ स्त्रियऊचुः ॥ शीलेसदन्नप्रस्थस्यपुंनाम्नासंस्कृतस्यच ॥५५॥

क्या दान है तथा इस व्रतमें किस देवताकी पूजा होतीहै ऐसे वचनोंको सुन सब स्त्रियाँ बोलती भईं कि, हे शीले ! अच्छे अन्नका प्रस्थ कहिये एक सेरका पुरुषसदृश नाम जिसको लोकमें पूप कहते उसको बनावे ॥ ५५ ॥

उस पूपके दो भाग करे अर्ध भाग ब्राह्मणको देवे अर्ध भाग आप भोजन करे और शक्ति समान दक्षिणा देवे और धन इत्यादिकोंका मद नहीं करे ॥ ५६ ॥ और नदीके किनारेपर सदा अनंतके पूजनको करे और कुशका शेषनाग बनाकर वंशके पात्रमें स्थापन कर ॥ ५७ ॥ उस शेषको आवाहन प्राणप्रतिष्ठा करके

अर्धंविप्रायदातव्यमर्धमात्मनिभोजनम् ॥ शक्त्याचदक्षिणांदद्याद्वित्तशाठ्यविवर्जितः ॥ ५६ ॥ कर्तव्यंचसरित्तीरेसदानंतस्यपूजनम् ॥ शेषंकुशमयंकृत्वावंशपात्रेनिधायच ॥ ५७ ॥ स्नात्वानंतंसमभ्यर्च्यमंडलेगंधदीपकैः ॥ पुष्पैर्धूपैश्चनैवेद्यैर्नानापक्वान्नसंयुतैः ॥ ५८ ॥ तस्याग्रतोदृढंन्यस्यकुंकुमाक्तंसुदोरकम् ॥ चतुर्दशग्रंथियुतंगंधाद्यैरर्चयेच्छुभैः ॥ ततस्तुदक्षिणेपुंसांस्त्रीणांवामेकरेन्यसेत् ॥ ५९ ॥

स्नान करावे और वेदीपर चंदन, पुष्प, धूप, दीप और बहुत प्रकारके नैवेद्य अर्पण करे ॥ ५८ ॥ उस शेषके आगे कुंकुमसे रंगाहुआ और चतुर्दश ग्रंथी हों जिसमें ऐसे दोराको पूजन करैं और पुरुषोंके दाहिने हाथमें तथा स्त्रियोंके बाँये हाथमें बांधना ॥ ५९ ॥



और बाधनेके समयमें यह मंत्र पढै हे अनंत संसार जो महासमुद्र है उसमें मैं डूबताहूं मेरेको आप उद्धार

हाथमें तथा स्त्रियोंके बाँये हाथमें बांधना ॥ ५९ ॥



और बाधनेके समयमें यह मंत्र पढे हे अनंत संसार जो महासमुद्र है उसमें मैं डूबताहूं मेरेको आप उद्धार करो हे वासुदेव ! अनंतरूपमें युक्तकरो ऐसा जो अनंतसूत्र है उसके अर्थ मेरा नमस्कार है ॥ ६० ॥ इस मंत्रको पढकर दोरा बांधकर हारि कहिये अनंतकी इस कथाको श्रवण करै और संसाररूपी नारायण अनंतको ध्यान करै ॥ ६१ ॥ पूजाके अंतमें भोजन करके स्त्रियां कहतीहैं कि, हे शीले !

अनन्तसंसारमहासमुद्रमग्नंसमभ्युद्धरवासुदेव ॥ अनन्तरूपेविनियोजयस्वह्यनंतसूत्रायनमो नमस्ते ॥ ६० ॥ अनेनदोरकंबद्धाकथांश्रुत्वाहरेरिमाम् ॥ ध्यात्वानारायणंदेवमनंतंविश्वरूपिणम् ॥ ६१ ॥ भुक्त्वाचांतेव्रजेद्वेश्मभद्रेप्रोक्तंव्रतंतव ॥ श्रीकृष्ण उवाच ॥ एवमाकर्ण्य राजेन्द्रप्रत्हृष्टेनान्तरात्मना ॥ ६२ ॥

अपने गृहको जावै इसप्रकारसे मैंने तुमसे व्रतक विधान कहा और यही कथाका प्रसंग राजा युधिष्ठिरसे कृष्णजी कहते हैं कि, हे युधिष्ठिर! उस शीलाने जब स्त्रियोंके ऐसे वचनोंको सुना तब तो अतिशयसे आनंद होकर ॥ ६२ ॥

व्रतको करती भई और हाथमें दोराको बांधकर और माताने जो मार्गके अर्थ भोजन दियाथा उसमेंसे अर्धभाग ब्राह्मणको दिया शेष अर्धभाग आप भोजन करती भई ॥ ६३ ॥ फिर वह शीला आनन्द होकर पतिके सहित बैलगाडीमें बैठकर अपने गृहको गई और उसी समयसे शीलाको व्रतका प्रभाव जानप

सापिचक्रेव्रतंशीलाकरेबद्धासुदोरकम् ॥ पाथेयमर्धंविप्रायदत्वाभुक्त्वास्वयंततः ॥ ६३ ॥ पुनर्जगामसंहृष्टागोरथेनस्वकंगृहम् ॥ भर्त्रासहैवशनकैःप्रत्ययस्तत्क्षणादभूत् ॥ ६४ ॥ तेनानंतव्रतेनास्यबभौगोधनसंकुलम्॥गृहाश्रमंश्रियाजुष्टंधनधान्यसमान्वितम् ॥ ६५॥ आकुलंव्याकुलंरम्यंसर्वदातिथिपूजनैः ॥ सापिमाणिक्यकाञ्चीभिर्मुक्ताहारैर्विभूषिता ॥ ६६ ॥

डा ॥ ६४ ॥ उस अनंतके प्रभावसे गोधन और धनधान्य लक्ष्मीसे शीलाका गृह परिपूर्ण होगया॥६५॥ और अतिथियोंके पूजनसे किसीसमयमें शीलाको विश्रांति न प्राप्त होती थी और वह शीलाभी माणिक्य सुवर्ण मोतियोंके हारोंसे विभूषित हुई ॥ ६६ ॥





और देवताओंकी स्त्रियोंके समान सम्पन्न होकर धनपुत्रादिकोंसे युक्त हुई और सावित्री समान

सुवर्ण मोतियोंके हारोंसे विभूषित हुई ॥ ६६ ॥



और देवताओंकी स्त्रियोंके समान सम्पन्न कहिये धनपुत्रादिकोंसे युक्त हुई और सावित्री समान पतिव्रता होतीभई गृहमें पतिके निकट आनन्दरूपिणी होकर चला फिरा करे ॥ ६७ ॥ किसी समयमें उसके पति कौंडिन्यऋषिने बैठीहुई शीलाके हाथमें वह अनंतका दोरा बांधा हुआ देखा ॥ ६८ ॥ और शंका करके पूंछा कि, हे शीले ! मेरेको वश करनेके अर्थ तूने इस दोराको बांधाहै सत्य कह

देवाङ्गनेवसंपन्नासावित्रीप्रतिमाभवत् ॥ विचचारगृहेभर्तुःसमीपेसुखरूपिणी॥६७॥कदाचिद्दुपविष्टायादृष्टोबद्धः स दोरकः ॥ शीलायाहस्तमूलेतुभर्त्रातस्याद्विजन्मना ॥ ६८ ॥ किमिदंदोरकंशीलेममवश्यायकल्पितम् ॥ धृतंसुदोरकंत्वेतत्किमर्थंब्रूहितत्त्वतः ॥ ६९ ॥ शीलोवाच ॥ यस्यप्रसादात्सकलाधनधान्यादिसंपदः ॥ लभ्यंतेमानवैश्चापिसोनंतोयंमयाधृतः ॥ ७० ॥

किसके अर्थ इस दोराको तूने धारण किया ॥ ६९ ॥ यह वचन सुन शीला बोली कि, हे स्वामिन् ! जिसके प्रसादसे संपूर्ण मनुष्यलोग अष्टसिद्धि नवनिधि सम्पदाओंको पाते हैं उसी अनंतको मैंने धारण कियाहै ॥ ७० ॥

ऐसे वचनोंको जब उसके पति कौंडिन्यऋषिने सुना तब तो श्री कहिये लक्ष्मीके मदसे उन्मत्तहो अनंतके दोराको तोर डाला ॥ ७१ ॥ और क्रोधकर बोला कि यह अनंत कौन है इसप्रकारके वचनोंको उस मूढने कहा और जलतीहुई अग्निमें दोराको डाल दिया तब तो हायहाय करके दौडके ॥ ॥ ७२ ॥ उस अनंतसूत्रको शीलाने अग्निसे बाहर निकालकर दुग्धमें डालदिया तब तो उस कौंडिन्य ऋषिके

शीलायास्तद्वचः श्रुत्वाभर्त्रातेन द्विजन्मना ॥ श्रीमदान्धेनकौरव्यसाक्षेपंत्रोटितस्तदा ॥७१॥
कोनन्तइतिमूढेनजल्पतापापकारिणा ॥ क्षिप्तोज्वालाकुलेवह्नौहाहाकृत्वाप्रधावती ॥ ७२ ॥
शीलागृहीत्वातत्सूत्रंक्षीरमध्येसमाक्षिपत् ॥ तेनकर्मविपाकेनसाश्रीस्तस्यक्षयंगता ॥ ७३ ॥
गोधनंतस्करैर्नीतंगृहंदग्धंधनंगतम् ॥ यद्यथैवागतंगेहेतत्तथैवपुनर्गतम् ॥ ७४ ॥

कर्म्मोंके फलसे वह ऐश्वर्य्य उसका नाश होगया ॥ ७३ ॥ और चोरोंने उसकी गौओंको चुराय लिया अग्निसे उसका गृह जलगया धन चलागया जो पदार्थ जिस प्रकारसे आया था वह उसी प्रकारसे फिर चलागया ॥ ७४ ॥



और अपने बंधुवर्गोंसे नित्यप्रति झगडा और मारपीट होनेलगी अनंतके तोड डालनेसे गृहमें

फिर चलागया ॥ ७४ ॥



और अपने बंधुवर्गोंसे नित्यप्रति झगडा और मारपीट होनेलगी अनंतके तोड डालनेसे गृहमें दारिद्र्यने आकर वास किया ॥ ७५ ॥ श्रीकृष्णजी कहतेहैं कि हे युधिष्ठिर ! उसके साथ कोई मनुष्य कुछ वार्ताभी न करे तब तो कौंडिन्यऋषि शरीरसे कृश और मनसे अतिग्लानिको प्राप्त

स्वजनैःकलहोनित्यंबंधुभिस्ताडनंतथा ॥ अनन्ताक्षेपदोषेणदारिद्र्यंपतितंगृहे ॥ ७५ ॥ नकश्चिद्वदतेलोकस्तेनसार्द्धंयुधिष्ठिर ॥ शरीरेणातिसंतप्तोमनसाप्यातिदुःखितः ॥ ७६ ॥ निर्वेदंपरमंप्राप्तःकौंडिन्यःप्राहतांप्रियाम् ॥ ॥ कौंडिन्यउवाच ॥ ॥ शीलेममेदमुत्पन्नंसहसा शोककारणम् ॥ ७७ ॥ येनातिदुःखमस्माकंजातःसर्वधनक्षयः ॥ स्वजनैःकलहोगेहेनकश्चिन्मांप्रभाषते ॥ ७८ ॥

भया ॥ ७६ ॥ और वह कौंडिन्यऋषि परमदुःखमें प्राप्त भया तब तो शीलासे बोला कि, हे शीले ! मेरेको एकाएकी शोकका कारण क्यों होता भया ॥ ७७ ॥ जिससे हमको अति दुःख प्राप्त होताहै और संपूर्ण धन नाश होगया तथा कुटुम्बियोंमें झगडा होताहै कोई मनुष्य मेरेसे वार्ताभी नहीं करता ॥ ७८॥

मेरे देहमें नित्यप्रति पीडा और चित्तमें महाकठोर खेद होताहै हे शीले ! तुम जो जानती हो कि, मेरेसे क्या अपराध भया और क्या करनेसे मेरा कल्याण होगा ॥ ७९ ॥ ऐसे पतिके वचनोंको सुन दिव्यस्वभाववाली तथा शीलही है आभूषण जिसका ऐसी वह शीला कौंडिन्यऋषिसे बोलती भई; हे

शरीरेनित्यसंतापः खेदश्चेतसिदारुणः ॥ जानासिदुर्नयःकोत्रार्किंकृत्वासुकृतंभवेत् ॥ ७९ ॥
प्रत्युवाचाथतंशीलासुशीलाशीलमंडना ॥शीलोवाच॥ प्रायोनंतकृताक्षेपपापसंभवजंफलम्॥
॥ ८० ॥ भविष्यातिमहाभागतदर्थंयत्नमाचर ॥ एवमुक्तःसविप्रर्षिर्जगाममनसाहरिम् ॥८१॥

स्वामिन् ! आपने अनंतके दोराको आक्षेप किया उसही पापसे उत्पन्न भया यह फल है ॥ ८० ॥ हे महाभाग ! द्रव्यादि संपूर्ण पदार्थ होंगे परन्तु उनके अर्थ उपाय करो ऐसे शीलाके वचनोंको सुन वह कौंडिन्यऋषि मनसे अनन्तदेवके शरणमें जाता भया ॥ ८१ ॥

और कौंडिन्यऋषि परमदुःखसे दुःखित तपके अर्थ संकल्प करके वनको जाता भया और वनमें वायु भक्षण करके वास करता भया ॥ ८२ ॥ और मनसे विचार करता है उस जगदीश्वर अनंतको मैं कहांपर दर्शनको प्राप्त हूंगा जिसके प्रसन्नतासें द्रव्यादि पदार्थ मिलें और उसके आक्षेपसे नाशको प्राप्त भया ॥ ८३ ॥ जो

निर्वेदान्निर्जगामाथकौंडिन्यःप्रयतोवनम् ॥ तपसेकृतसंकल्पोवायुभक्षोद्विजोत्तमः ॥ ८२ ॥
मनसाध्यायचानंतंक्वद्रक्ष्यामिचतंविभुम् ॥ यस्यप्रसादात्संजातमाक्षेपान्निधनंगतम् ॥ ८३ ॥
धनादिकंममातीवसुखदुःखप्रदायकम् ॥ एवंसंचिंतयन्सोथबभ्रामगहनेवने ॥ ८४ ॥
तत्रापश्यन्महाचूतंपुष्पितंफलितंद्रुमम् ॥ वर्जितंपक्षिसंघातैःकीटकोटिसमावृतम् ॥ ८५ ॥

धनादि पदार्थ पूर्व मुझको सुख देतेथे वे पदार्थ इस समय महादुःखको देतेहैं यह विचार करता हुआ वह कौंडिन्यऋषि निर्जन वनमें घूमता भया ॥८४॥ उस वनमें कौंडिन्यऋपिने आम्रका वृक्ष फलफूलसे संपन्न देखा और उस वृक्षके ऊपर पक्षिओंके समूह नहीं हैं तथा उसके फलोंमें कोटियों कीडा पडगये हैं ॥८५॥

तब तो वह कौंडिन्यऋषि उस वृक्षसे पूछता है कि, हे महातरो ! तूने किसी स्थानमें अनंतदेवको देखा है ? हे सज्जन देखाहो तो कह काहेसे मेरे चित्तमें बहुतसा दुःख वर्तमान है ॥ ८६ ॥ तब तो आम्रबोलता भया कि, हे कौंडिन्यजी मैंने अनंतको किसी स्थानमें नहीं देखा जब उसने ऐसा उत्तर दिया

तमपृच्छद्द्विजोनंतःक्वचिद्दृष्टोमहातरो ॥ ब्रूहिसौम्यममातीवदुःखंचेतसिवर्तते ॥ ८६ ॥ सोब्रवीद्ब्रह्मनानंतः क्वचिद्दृष्टोमयाद्विज ॥एवंनिराकृतस्तेनसंजगामाथदुःखितः ॥८७॥ क्वद्रक्ष्यामीतिगच्छन्सगामपश्यत्सवत्सकाम् ॥ वनमध्येप्रधावंतीमितश्चेतश्चपांडव ॥ ८८ ॥

तब तो कौंडिन्यऋषि महादुःखसे आगेको चलता भया ॥ ८७ ॥ कृष्णजी युधिष्ठिरसे कहते हैं कि, हे युधिष्ठिर ! वह अनंतके दर्शनकी लालसा करता हुआ इतनेमें बछराके सहित गौ देखता भया जो वनमें इधर उधर घूमरही है ॥ ८८ ॥

वह कौंडिन्यऋषि पूछता है कि, हे धेनुके ! जो अनंतको तूने देखाहो तो कह ऐसे वचनको सुन गौ बोली कि, हे द्विज ! मैं अनंतको जानती नहींहूं ॥ ८९ ॥ तब तो आगे चलके घासमें चरते हुए बैलको देखकर पूछता है कि, हे गोस्वामिन् ! तूने अनंतको देखा है ॥ ९० ॥ तब तो वहबैल बोला कि मैंने

सोब्रवीद्धेनुकेब्रूहियद्यनंतस्त्वयेक्षितः ॥ गौरुवाचाथकौंडिन्यंनानंतंवेदम्यहंद्विज ॥८९॥ ततो व्रजन्ददर्शाग्रेवृषभंशाद्वलस्थितम् ॥ दृष्ट्वापप्रच्छगोस्वामिन्ननंतोवीक्षितस्त्वया ॥ ९० ॥ वृषभस्तमुवाचेदंनानंतोवीक्षितोमया ॥ ततोव्रजन्ददर्शाग्रेरम्यंपुष्करिणीद्वयम् ॥ ९१ ॥ अन्योन्यजलकल्लोलैर्वीचिपर्यंतसंगतम् ॥ छन्नंकमलकह्लारैःकुमुदोत्पलमंडितम् ॥ ९२ ॥

अनंतको नहीं देखा यह सुन कौंडिन्यऋषिने आगे चलकर दो पुष्करिणियोंको देखा ॥ ९१ ॥ जलके कल्लोलसे परस्पर लहरीपर्य्यंत मिल जाती हैं और कमल कुमुदिनी तथा बहुत प्रकारकी शोभा-ओंसे युक्त हैं ॥ ९२ ॥

और भ्रमर हंस चक्र कहिये चकवी चकवा तथा सारस बगुला जाति जातिके पक्षीगणोंसे युक्त हैं वह कौंडिन्य पुष्करिणियोंसे पूछता भया तुम दोनोंने अनंतको देखा है ॥ ९३ ॥ यह सुन पुष्करिणियोंने उत्तर दिया हे द्विज ! हमोंने अनंतको नहीं देखा तब तो आगे चलकर गर्दभ और हस्तीको देखा ॥ ९४ ॥

सेवितंभ्रमरैर्हंसैश्चक्रैःकारंडवैर्बकैः ॥ तेअपृच्छद्द्विजोनंतोयुवाभ्यामुपलक्षितः ॥ ९३ ॥ ऊचतु स्तेपुष्करिण्यौनानंतोवीक्षितोद्विज ॥ ततोव्रजन्ददर्शाग्रेगर्दभंकुंजरंतथा ॥ ९४ ॥ तावप्युक्तौ द्विजेनेत्थंनेतिताभ्यांनिवेदितम् ॥ एवंसपृच्छन्नष्टाशस्तत्रैवनिषसादह ॥ ९५ ॥ कौंडिन्यो विह्वलीभूतोनिराशोजीवितेनृप ॥ दीर्घमुष्णंचनिःश्वस्यपपातभुविभारत ॥ ९६ ॥

कौंडिन्यऋषिने उन दोनोंसे पूछा कि, क्या तुमने अनंतको देखा है उन्होंने उत्तर दिया हमने देखा नहीं ऐसे वह पूछता रहा कि, उसकी आशा नष्ट होगई वह वनमें बैठता भया ॥ ९५ ॥ और हे युधिष्ठिरजी ! कौंडिन्यजी आशा छोड़कर विह्वल होके बहुत तथा गर्म श्वासको छोडकर पृथ्वीमें गिरपडे ॥ ९६ ॥

और थोडे समयमें सावधानहोकर उस कौंडिन्यने हे अनंत ! ऐसा कहता हुआ उठकर संकल्पाकिया कि मैं प्राणनको छोडदूंगा ॥ ९७ ॥ हे युधिष्ठिर ! जबतक वृक्षमें मरनेके अर्थ बंधनको करै तबतक कृपा करिके अनंतजी प्रत्यक्ष आगये ॥ ९८ ॥ वृद्ध ब्राह्मणको रूप धारण कियेहुये अनंतने कहा हे द्विज ! इधर

प्राप्यसंज्ञांवनेतस्मिञ्जलपन्नुत्थायसद्विजः ॥ नूनंत्यक्ष्याम्यहंप्राणानितिसंकल्प्यचेतसि ॥९७॥ यावदुद्बंधनंवृक्षेचक्रेतावद्युधिष्ठिर ॥ कृपयानंतदेवोस्यप्रत्यक्षंसमजायत ॥ ९८ ॥ वृद्धब्राह्मण रूपेणइतएहीत्युवाचतम् ॥ प्रगृह्यदक्षिणेपाणौगुहायांप्रविवेशतम् ॥ ९९ ॥ स्वांपुरींदर्शयामासदिव्यनारीनरैर्युताम् ॥ तस्यांनिविष्टमात्मानंदिव्यंसिंहासनेशुभे ॥ १०० ॥

आवो और उसका दाहिना हाथ पकडकर पर्वतके गुहामें प्रवेश कर गये ॥ ९९ ॥ और सुन्दर नर नारियोंसे युक्त उस ऋषिको अपनी पुरीको दिखावतेभये उस पुरीमें प्रवेश करके सिंहासनमें बैठ अपना रूप दिखावते भये ॥ १०० ॥

और शंख चक्र गदा पद्म गरुडके सहित विश्वरूप अनंतको ऋषिनिमित्त दिखावते भये ॥ १०१ ॥ कैसा है वह विश्वरूप जिसको कौंडिन्यने देखा अनंत विभूतियोंके भेदोंसे सूर्यसे अधिक तेज और कौस्तुभमणिके सहित वनमालाको धारण कियेहुए ॥ १०२ ॥ देवतोंके देवताको तथा किसीसे नहीं पराजयको प्राप्तहोने वालेको सम्पूर्ण पुरुषोंके पूज्यको उस विश्वरूपको कौंडिन्य देखकर स्तुति करता है॥ १०३॥ हे पुंडरीकाक्ष !

पार्श्वस्थशंखचक्राब्जगदागरुडशोभितम् ॥ दर्शयामासविप्रायविश्वरूपमनंतकम् ॥ १०१ ॥
विभूतिभेदैश्चानंतैराजंतमामितौजसम् । कौस्तुभेनविराजंतंवनमालाविभूषितम्॥ १०२॥तंदृष्ट्वा
देवदेवेशमनंतमपराजितम् ॥ वंदमानोजगादोच्चैर्जयजब्दपुरःसरम्॥ १०३ ॥पापोहंपापकर्मा
हंपापात्मापापसंभवः ॥ त्राहिमांपुंडरीकाक्षसर्वपापहरोभव ॥ १०४ ॥

मैं पापिष्ठ हूं और पाप कर्म्मोंको करनेवाला हूं और मेरा शरीर भी पापीहै और मैं पापसे उत्पन्न हूं आप मेरी रक्षा करो और मेरे पापोंको हरो ॥ १०४ ॥

हे जगदीश ! आज मेरा जीवन तथा जन्मभी सफलहै जाहेसे आपके दोनों पादोंपर हमारा मस्तक भ्रमरके समान स्पर्श कर रहा है ॥ १०५ ॥ तब तो कौंडिन्यऋषिके वचनोंको सुन अनंत देवने मधुरवाणीसे कहा कि, हे कौंडिन्यऋषि ! तू भय मत मान तेरे मनमें जो वार्ता हो उसको कह ॥ १०६ ॥ यह सुन कौंडिन्य

अद्यमेसफलंजन्मजीवितंचसुजीवितम् ॥ यत्तवांघ्र्यब्जयुगलेमन्मूर्धाभ्रमरायते ॥ १०५ ॥
तच्छ्रुत्वानंतदेवेशः प्राहसुस्निग्धयागिरा ॥ माभैस्त्वंब्रूहिविप्रेन्द्रयत्तेमनसिवर्तते ॥ १०६ ॥
॥ कौंडिन्य उवाच ॥ ॥ मयाभूत्यवलिप्तेनत्रोटितोनंतदोरकः ॥ तेनपापविपाकेनभूतिर्मेप्रलयंगता ॥ १०७ ॥

बोला कि मैंने संपदाओंसे मदवाला होके अनंतका दोरा तोड डाला उस पापकर्मके फलसे मेरी संपूर्ण संपदा नष्ट होगई ॥ १०७ ॥

और मेरे गृहमें बंधुवर्गोंसे नित्य झगडा होताहै और मेरेसे कोई पुरुष वार्ता भी नहीं करता तथा महादुःखित होकर तुम्हारे दर्शनके अर्थ मैं वनमें आया ॥ १०८ ॥ हे अनंत देवेश ! आपने कृपापूर्वक मेरेको अपना दर्शन दिया मैंने जो पाप किया उसका नाश कैसे होगा

स्वजनैःकलहोगेहेनकश्चिन्मांप्रभाषते ॥ निर्वेदाद्भ्रमितरण्येतवदर्शनकांक्षया ॥ १०८ ॥ कृपयादेवदेवेशत्वयात्मासंप्रदर्शितः ॥ तस्यपापस्यमेशांतिकारुण्याद्वक्तुमर्हसि ॥ १०९ ॥ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ तच्छ्रुत्वानंतदेवेशउवाचाद्विजसत्तमम् ॥ भक्त्यासंतोषितो देवःकिंनदद्याद्युधिष्ठिर ॥ ११० ॥

दयापूर्वक आप कहने योग्यहो ॥ १०९ ॥ श्रीकृष्णजी कहते हैं कि युधिष्ठिर ! कौंडिन्यके वचनको सुन अनंतदेव कौंडिन्यसे बोले कि, तुम्हारी भक्तिसे अनंतदेव है तुमको संपूर्ण पदार्थ मिलैंगे ॥ ११० ॥

और अपने गृहको जा हे कौंडिन्य ! विलम्ब मतकर और चतुर्दशवर्षतक भक्तिपूर्वक अनंत व्रतको कर ॥ १११ ॥ और तू संपूर्ण पापोंसे छूटकर उत्तम सिद्धिको प्राप्त होगा और पुत्र पौत्र तेरे औरभी जो कोई मनोरथोंकी इच्छा करेगा उनको तू प्राप्त होगा॥ ११२॥ और मरणसमयमें तेरेको मेरा

॥ अनंतउवाच ॥ स्वगृहेगच्छकौंडिन्यमाविलंबंकुरुद्विज ॥ चरानंतव्रतंभक्त्यानववर्षाणिपंचच ॥ १११ ॥ सर्वपापविशुद्धात्माप्राप्स्यसेसिद्धिमुत्तमाम् ॥ पुत्रपौत्रान्समुत्पाद्य भुक्त्वाभोगान्यथेप्सितान् ॥ ११२ ॥ अंतेमत्स्मरणंप्राप्यमामुपेष्यस्यसंशयम् ॥ अन्यंच तेवरंदद्मिसर्वलोकोपकारकम् ॥ ११३ ॥

स्मरण होगा और मरणके पश्चात् मेरे परमपदको तू प्राप्त होगा इसमें संदेह नहीं है औरभी संपूर्ण लोकोंके उपकारके अर्थ मैं तुमको वर देताहूं ॥ ११३ ॥

जो कोई पुरुष इस शीलाकृत अनंतव्रतकी श्रेष्ठ कथाको पढेगा और शीलाके समान इस अनंतव्रतको करेगा वह व्रतको करते ॥ ११४ ॥ शीघ्रही संपूर्ण पापोंसे छूटकर परमगतिको प्राप्त होगा अनंतजी कहतेहैं कि, कौंडिन्य तू जिस मार्गसे इहांपर आया है उसही मार्गसे अपने गृहको शीघ्रही जा ॥ ११५ ॥ यह

इदमाख्यानकवरंशीलानंतव्रतादिकम् ॥ करिष्यतिनरोयस्तुकुर्वन्व्रतमिदंशुभम् ॥ ११४ ॥
सोचिरात्पापनिर्मुक्तःप्राप्नोतिपरमांगतिम् ॥ गच्छविप्रगृहंशीघ्रंपथायेनागतोह्यसि ॥ ११५ ॥
॥ ॥ कौंडिन्य उवाच ॥ ॥ स्वामिन्पृच्छामितेब्रूहिकिंचित्कौतूहलंमया ॥ अरण्ये
भ्रमताद्दष्टंतद्वदस्वजगद्गुरो ॥ ११६ ॥

वचन सुनके कौंडिन्यने कहा कि, हे स्वामिन् ! मैंने वनमें घूमते कुछ आश्चर्य देखा है, आपसे पूछताहूं आप कृपाकरि उत्तर देंगे ॥ ११६ ॥

जो आम्र वृक्ष है वह कौन है गौ और बैल कौन है कमल आदिकोंसे शोभाको प्राप्त दो पुष्करणी मैंने महावनमें देखीं वे कौन हैं वह गर्दभ कौन है और हस्ती कौन है यह वृद्ध ब्राह्मण कौन है आप इन सबोंका वृत्तांत विस्तारपूर्वक मेरेसे कहो ॥ ११७ ॥ ११८ ॥ यह सुन अनंतजी बोले

यश्चूतवृक्षःकस्तत्रकागौःकोवृषभस्तथा ॥ कमलोत्पलकह्लारैःशोभितंसुमनोहरम् ॥ ११७ ॥ मयादृष्टंमहारण्येकिंतत्पुष्करिणीद्वयम् ॥ कःखरःकुंजरःकोसौकोसौवृद्धोद्विजोत्तमः ॥११८॥ ॥ ॥ अनंतउवाच ॥ सचूतवृक्षोविप्रौसौविद्यावेदविशारदः ॥ विद्यानदत्ताशिष्येभ्यस्तेनासौ तरुतांगतः ॥ ११९ ॥ यागौर्वसुंधरादृष्टापूर्वंसाबीजहारिणी ॥ वृषोधर्मस्त्वयादृष्टःशाद्वलेयः समास्थितः ॥ १२० ॥

कि, हे कौंडिन्यजी ! वह आम्रका वृक्ष पूर्वका विद्वान् ब्राह्मण है उसने विद्यार्थियोंको विद्या दान नहीं दिया उस कारणसे वह वृक्ष भया ॥ ११९ ॥ तूने जो गौ देखी वह पृथ्वी है उसने पूर्वही बीजको चुराया है और जो तूने बैल देखा है वह धर्म्म है ॥ १२० ॥

वे दोनों पुष्करिणी धर्म और अधर्म कारणसे पुष्करणी हुई हैं वे पूर्वजन्ममें कोई ब्राह्मणजातिकी भगिनी थीं और आपसमें बराबर व्यवहार करती थीं ॥ १२१ ॥ वे दोनों भगिनी धर्म और अधर्म जो करती थीं वह परस्पर करती थीं और उन्होंने ब्राह्मणके अर्थ तथा अतिथिको और दुर्बलको कुछभी भोजनादि पदार्थ नहीं दिया ॥ १२२ ॥ याचकोंको भिक्षा भी कभी नहीं

धर्माधर्मव्यवस्थानंतच्चपुष्करिणीद्वयम् ॥ ब्राह्मण्यौकेचिदप्यास्तांभगिन्यौतेपरस्परम् ॥
॥ १२१ ॥ धर्माधर्मादियत्किंचित्तानिवेदयतोमिथः ॥ विप्रायनक्कचिद्दत्तमतिथौदुर्बलेपिवा ॥
॥१२२॥ भिक्षादत्तानचार्थिभ्यस्तेनपापेनकर्मणा॥ वीचिकल्लोलमालाभिर्गच्छतस्तेपरस्परम्
॥१२३॥ खरःक्रोधस्तथादृष्टःकुंजरोमदउच्यते ॥ ब्राह्मणोसावनंतोहंगुहासंसारगह्वरम् १२४॥

दिया उस पापकर्म्मसे परस्पर लहरी और जल एकत्र होता है ॥ १२३ ॥ जो तूने गर्दभ देखा वह क्रोध है जो हस्ती देखा वह मद है और वह वृद्ध ब्राह्मण मैं अनंतहूं और वह गुहा कहिये कन्दरा भयदाता संसार है ॥ १२४ ॥

इस प्रकारसे कहकर अनंतदेवजी अंतर्धान होगये और यह चरित्र कौंडिन्य स्वप्नसमान देखकर अपने गृहको आवता भया ॥ १२५ ॥ कृष्णजी कहते हैं कि, हे युधिष्ठिर ! वह कौंडिन्य ऋषिने चतुर्दशवर्ष अनंत व्रतको किया और अनंतके कहेहुए समान भोगोंको भो

इत्युक्त्वादेवदेवेशस्तत्रैवांतरधीयत ॥ स्वप्नप्रायंतुतद्दृष्ट्वाततः स्वगृहमागतः ॥१२५ ॥ कृत्वा नंतव्रतंसम्यङ्नववर्षाणिपंचच ॥ भुक्त्वासर्वमनंतेनयथोक्तंपांडुनंदन ॥ १२६ ॥ अंतेचस्मरणंप्राप्यगतोनंतपुरेद्विजः ॥ तथात्वमपिराजर्षेकथांश्शृण्वन्व्रतंकरु ॥ १२७ ॥

गकर ॥ १२६ ॥ और मरणसमयमें अनंतको स्मरण करके अनंतपुरको जाता भया. श्रीकृष्णजी कहते हैं कि, हे युधिष्ठिर ! उसी प्रकारसे तुमहूं कथाको सुनो और चतुर्दशवर्ष अनंत व्रतको करो ॥ १२७ ॥

॥ २९ ॥

जैसे चतुर्दशवर्षमें वह कौंडिन्य अनंतदेवके कहे हुए समान फलको प्राप्त भया वैसेही तूभी संपूर्ण मनोरथोंको प्राप्त होगा ॥ १२८ ॥ जो फलकी इच्छा करै आख्यानसहित व्रतको करै तो एकही वर्षमें मनोरथ फलको प्राप्त होगा कृष्णजी कहते हैं कि, हे युधिष्ठिर! यह व्रतोंमें उत्तम

प्राप्स्यसेचिंतितंसर्वमनंतस्यवचोयथा ॥ यद्वैचतुर्दशेवर्षेफलंप्राप्तंद्विजन्मना ॥ १२८॥ वर्षैके नतदाप्नोतिकृत्वासाख्यानकंव्रतम् ॥ एतत्तेकथितंभूपव्रतानामुत्तमंव्रतम् ॥ १२९ ॥ यत्कृ त्वासर्वपापेभ्योमुच्यतेनात्रसंशयः ॥ येपिशृण्वंतिसततंपठ्यमानंपठंतिये ॥ तेपिपापविनिर्मु क्ताःप्राप्स्यंतिचहरेःपदम् ॥ १३० ॥

व्रत मैंने आपको सुनाया ॥ १२९ ॥ और उस व्रतके करनेसे मनुष्य संपूर्ण पापोंसे छूट जाता है इसमें संशय नहीं है जो कोई कथाको सुनते हैं तथा पढते हैं वे पापोंसे छूटकर अनंतलोकको प्राप्त होते हैं ॥ १३० ॥

॥ २९

हे कुरुकुलोद्भव ! जो कोई शुद्धचित्तवाले मनुष्य इस संसारसागरगुहामें सुखपूर्वक विहार करनेकी इच्छा

संसारसागरगुहासुसुखंविहर्तुंवांछंतियेकुरुकुलोद्भवशुद्धसत्त्वाः ॥ संपूज्यचत्रिभुवनेशमनंतदेवंबध्नंतिदक्षिणकरेवरदोरकंते ॥ १३१ ॥ ॥ छ ॥ ॥ इत्यनंतकंथा समाप्ता ॥

करतेहैं वे त्रिभुवनके स्वामी अनंतदेवका पूजन करके दाहिने हाथमें अनंतदोराको बांधतेहैं ॥ १३१ ॥
इत्यनंतव्रतकथाभाषाटीकासंपूर्णा ॥ शुभं भूयात् ॥

इत्यनंतकथाभाषाटीका समाप्ता ।

